हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

६३

काव्यविभागे (८) अष्टमं पुष्पम् ।

सव्याख्यं

# प्रेमरसायनम् ।

श्रीमद्विश्वनाथपण्डितप्रवरेण निर्मितम् ।



प्रकाशकः—
जयकृष्णदास-हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस.
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

THE
KASHI-SANSKRIT-SERIES
( *HARIDAS SANSKRIT GRANTHAMALA* )

NO. 63.

( Kavya Section No 8 )



# PREMARASĀYANA

By

VIS'VANĀTHA PANDIT



Edited by

NEPALI PANDIT SRI VĪSHNŪ PRASĀD BHĀNDĀRĪ



*PRINTED, PUBLISHED & SOLD BY*
Jai Krishna Das Hari Das Gupta
The Chowkhamba Sanskrit Series Office,
Vidya Vilas Press, North of Gopal Mandir, Benares City.



1928.

Printed-Published & sold by
JAI KRISHNADAS-HARIDAS GUPTA,
The Chowkhamba Sanskrit Series Office,
VIDYA VILAS PRESS,
North of Gopal Mandir,
BENARES CITY.

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares,*

Agents:

1 Luzac & co, Booksellers,
LONDON

2 Otto Harrassowitz, Leipzig:
GERMANY.

3 The Oriental Book-supplying Agency,
POONA.

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः
६३
काव्यविभागे(८)अष्टमंपुष्पम् ।

सव्याख्यं

# प्रेमरसायनम् ।

श्रीमद्विश्वनाथपण्डितप्रवरेण निर्मितम् ।

नेपालदेशीय-
पण्डित श्रीविष्णुप्रसादभण्डारिणा
संशोधितम् ।

प्रकाशकः—
जयकृष्णदास-हरिदासगुप्तः—
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस,
गोपालमंदिर के उत्तरफाटक, बनारस सिटी ।

१९८५

# भूमिका ।



अथैष सव्याख्यः प्रेमरसायनाख्यः प्रबन्धो मुद्रयित्वा प्रकाशयितुमारभ्यते ।

अत्र च प्रेमलक्षणाभिधं प्रेमविभागाभिधमिति खण्डद्वयं वर्तते । तत्र प्रथमे खण्डे शाण्डिल्यभरताद्युक्तप्रेमलक्षणान्यनूद्य तेषु दोषोद्भाटनपुरस्सरं गुप्तपादाचार्यसम्मतमिच्छाविशेषः प्रेमेति प्रेम्णः सामान्यलक्षणमेव निर्दुष्टं व्यवस्थाप्य सिद्धान्ततयाश्रितम् । द्वितीयस्मिन् खण्डे सामान्यतोलक्षितस्य तस्यैवोप्तादिद्वादशविधाः सप्रपञ्चं विशेषतो लक्षिताः ।

प्रेममूलकशृङ्गाररसादीनाश्रित्य विलक्षणप्रतिभाशालिभिः प्राचीनैरर्वाचीनैश्च विद्वज्जनैरुद्भावितेषु नानाविधेषु साहित्यनिबन्धेषु सत्स्वपि तेषु शृङ्गारादिरसमूलभूतस्य प्रेम्णो विशेषतो निरूपणादर्शनात् स्वातन्त्र्येण तन्निरूपकाणां भक्तिरत्नाकरादिग्रन्थानां केषांचन विद्यमानत्वेऽपि साम्प्रतं तेषां दुर्लभतया कतिपयानां च विलुप्तप्रायतया एकत्रैव सङ्क्षिप्य सन्निवेशितानां तद्गतानां राद्धान्तानां सुखेन बोधौपयिको लघुरप्ययं प्रबन्धो बह्वर्थप्रतिपादकतयाऽमुद्रितचरैतादृशग्रन्थतया च प्रेमतत्त्वं बुभुत्सूनां सहृदयहृदयानां सूपयोगी स्यादित्यस्य मुद्रणोपक्रमः ।

अत्र मूलकर्तुष्टीकाकर्तुश्च पार्थक्येन नामानुल्लेखात् तत्र तत्र च मूलेऽनुक्तानां तदपेक्षितानां विषयाणां टीकायां सन्निवेशनस्य दर्शनेन च मूलटीकयोराभिन्नकर्तृकत्वमिति सम्भाव्यते ।

अस्य च प्रणेता पण्डितप्रवरः श्रीमान् विश्वनाथः । अयं च साहित्यदर्पणादिकर्तुर्विश्वनाथादन्यः स्यात् । तदुपाधेः सान्धिविग्रहिकत्वादेरनुल्लेखात् प्रमाणान्तरानुपलम्भाच्च ।

ग्रन्थप्रणयनसमयश्च ग्रन्थकर्त्रैव ग्रन्थसमाप्तौ—

बाणाग्निमुनिचन्द्रोत्थवत्सरस्यादिमे दिने ।

एषा वितीर्णा बह्वर्था वाणी विष्णुपदे त्वभूत् ॥

इति पद्येन स्वयमेवोट्टङ्कितत्वात् १७३५ पंचत्रिंशदुत्तरसप्तदशशततमोऽब्द इति विज्ञायते । त्रिपुरहरपुरवास्तव्येत्यन्तिमलेखदर्शनेन काशीनिवास्ययमिति निश्चीयते । अन्यदैतिहासिकं वृत्तं त्वस्य विषये किमपि न लब्धमित्येतावतैव सन्तोष्टव्यमितिहासरसिकैः ।

अमुं च प्रबन्धं मुमुद्रयिषुणाऽमुद्रितचरनानाविधग्रन्थरत्नमुद्रणरसिकेण श्रीमता हरिदासतनूजन्मना जयकृष्णदासगुप्तेन प्रार्थितोऽहं प्रावर्तिष्येतच्छोधनाय ।

जीर्णतरस्य नातिशुद्धस्यादसीयादर्शपुस्तकस्य प्रदातुः स्वसन्निधिस्थानि निजपूर्वजैश्चक्रपाणिप्रभृतिभिर्विद्वद्वरैः सङ्गृहीतान्यपराण्यपि दुर्लभप्रायाणि ग्रन्थरत्नानि यथासमयं प्रकाशनकृते दातुं प्रतिश्रुतवतो नेपालाभिजनस्य श्रीमतः पद्मनाभकेशरिविदुषो निर्व्याजलेशमीदृशमुपकारगौरवं सबहुमानं हृदाभिनन्दन् बहुतरमन्विष्यापीतरादर्शपुस्तकमलभमानः केवलस्योक्ताविद्वद्वराल्लब्धस्यादर्शपुस्तकस्याधारेण विषयानुक्रमणिकासंयोजनादिना परिष्कृत्य सपरिश्रमं कृतसंशोधनेऽप्यत्र मानुष्यकनान्तरीयकमन्मतिदृष्टिदोषसुलभास्त्रुटीरुपेक्षिष्यन्ते ग्रन्थतत्वमात्रग्राहिला गुणैकपक्षपातिनो विद्वद्वरा इत्याशास्ते—

१९८५ वैक्रमे ज्येष्ठ कृष्णे १० तिथौ

नेपालाभिजनः
विद्वद्विधेयः
श्रीविष्णुप्रसादभण्डारी ।

॥ श्रीः ॥

सव्याख्यस्य प्रेमरसायनस्य

# विषयानुक्रमणिका ।

इति लक्षणखण्डानुक्रमणिका ।

## अथ प्रेमविभागखण्डानुक्रमणिका ।

इति प्रेमविभागखण्डस्य विषयानुक्रमणिका समाप्ता ।

# अथ प्रेमरसायनम् ।

श्रीगणेशाय नमः ॥

गृहीतगोवेषभुवो भविष्यत्सन्त्राणसम्प्रत्ययसाधनाय ।
मुदेव देवः खलु बल्लवानां गोपालनोत्फुल्लकले कुलेऽभूत् ॥

इह कश्चित् ग्रन्थारम्भे प्रेम निरूपयितुं प्रेमातिशयाभिव्यञ्जकधर्मेण श्रीकृष्णं निर्दिशति—

कीर्त्तिप्रतापविधुभानुसमुज्ज्वलानि
धीरैः कृतानि वदनानि दिशां प्रयस्य ॥
सुव्यक्तगोपवनितानयनान्तपात—
पात्रैकरूपतिमिराणि मया तु तानि ॥ १ ॥

कीर्त्तीति । अत्र व्याजस्तुतिरलङ्कारः । यद्यपि नायं कविमदोत्कर्षमावेदयन् ग्रन्थारम्भे निबन्धुमर्हः, तथाप्येतदुपस्कार्यस्य श्रीकृष्णैकतानतारूपस्य प्रकृतग्रन्थप्रतिपाद्यस्य प्रेम्णो रूपणोपयोगित्वात्सोऽर्ह एव निबन्धुम् ।

इदानीं भङ्ग्यन्तरेण प्रकृतग्रन्थप्रतिपाद्यं दर्शयति—

उच्छलद्भावकल्लोलशृङ्गारादिरसाकरः ॥
जयत्यपारो गम्भीराश्चिरं प्रेममहार्णवः ॥ २ ॥

उच्छलदिति । उच्छलन्तोऽहमहमिकयेव व्यक्तीभवन्तो भावलक्षणाः कल्लोला बृहत्तरङ्गा येषु शृङ्गारादिरसेषु तेषामाकरः । प्रेमशून्ये रसानामनाविर्भावात् । अत्र भावाः कल्लोलपदसामानाधिकरण्याद्व्यभिचारिणोऽनुभावाश्च गृह्यन्ते । अपारः इतरचेतोवृत्तिवत्कालरोगानाश्यत्वात् । गम्भीरः विरोधिनस्तत्समयेऽनुद्भवात् कथंचिदुद्भवेऽपि तेनानभिभवात् । एतत्तत्त्वमग्रे वक्ष्यते । अत्रापारगम्भीरपदाभ्यां वक्ष्यमाणं सन्तृप्तमेव प्रेमाभिहितम् । अत एव जयति । मुक्तिहेतुज्ञान एवास्य विश्रान्तेः ।

यथाऽयमनुमितश्चमत्कारभूस्तथा न साक्षात्कृतो न शब्दप्रमितः। नच व्यक्त्यभिव्यक्तिविषयस्तथेति वाच्यम्। तत्राप्युपजीव्यतयाऽनुमानस्यापेक्षणात्। अतोऽस्यानुमापकमाह—

अत्युन्नताभिः शाखाभिर्बहीभिरिव भूरुहः ॥
भावानुभावलीलाभिः प्रेमा दूरेऽपि लक्ष्यते ॥ ३ ॥

अत्युन्नताभिरिति। अत्र भावाः सञ्चारिणः ३३ (सङ्ख्याकाः) तेषामनुमापकत्वं तदभिव्यञ्जकचेष्टया ज्ञातानामेव। दूरेऽपीति। इतरात्मगततया अयोग्योऽपीत्यर्थः।

इदानीं चिरन्तनमतानुसारेण प्रेमपदार्थं निरूपयितुं भूमिकामारचयति--

रसो ब्रह्मेति सिद्धान्तः स्थाय्युपाधिवशादयम् ॥
नदीतडागप्रमुखैर्भास्वानिव विभिद्यते ॥ ४ ॥

रस इति। सिद्धान्त इति 'रसो वै स' इति श्रुतेः। स्थायिनो=रत्यादयः। विभिद्यत इति रत्याद्यवच्छिन्नचैतन्यानां पृथक्त्वाद्रसो नानेत्यर्थः।

प्रेमपदार्थमाह--

यमुपाधिं समाश्रित्य रस आद्यो निगद्यते।
तमुपाधिं बुधोत्तंसाः प्रेमेति परिचक्षते ॥ ५ ॥

यमिति। आद्यः=शृङ्गारः।

प्रेमोत्पत्तौ भूमिकां रचयति--

चित्ताम्भोधेः समुत्पन्ना सत्त्ववारिविलासिनः ॥
दृष्टिः परिचयो हार्दं प्रेमेत्यूर्मिपरम्परा ॥ ६ ॥

चित्ताम्भोधेरिति। वृत्तिरूपनानातरङ्गोपादानतया चित्तस्याम्भोधिता। ननु क्रोधादिवृत्तीनामपि चित्ते दर्शनेन कथं दृष्ट्यादिचतुष्टयमेवोर्मित्वेन निरूप्यत इत्यत आह—सत्त्वेति। तथाच सत्त्वपरिणतस्य तस्य युक्तमेव वृत्तिचतुष्टयमिति भावः।

दृष्ट्यादिपरिचयादिभावं प्राप्तं प्रेमेति वक्तुमुपक्रमते चलस्येत्यादिना।

चलस्य चेतसो या स्यादुदासीनेषु(१) वस्तुषु ॥
अवारणीया वृत्तिः सा दृष्टिशब्देन कथ्यते ॥७॥

चलस्येति हेतुगर्भं विशेषणम् । तथाचोपेक्षानुपेक्षात्मकज्ञानं दृष्टिशब्दार्थ इति भावः । दृष्टिर्यथा—

अस्रौ हरिरिति प्रौढगुरुवर्गभयान्मया ।
अपि सम्मुखमागच्छन्वीक्षितोऽपि न लक्षितः ॥

संस्काराधायिका वृत्तिर्ज्ञेया परिचयात्मिका ।

संस्कारेति । वृत्तिरित्यत्यतः प्राक् चेतस इत्यनुषज्यते । एवमग्रेऽपि । तथाच सर्वांशेऽनुपेक्षात्मकं ज्ञानं परिचयशब्दार्थ इति भावः । परिचयो यथा—

तत्कृतपरिचयमात्रादपि कृतकृत्यो यथाहमुच्चैः स्याम् ।
हृदय ! तथाचर किञ्चिद्यत्स्मितपीयूषभूमयो मुनयः ॥

दोषानालोकिनी वृत्तिर्हार्दमित्यभिधीयते ॥ ८ ॥

दोषानालोकिनीति । दोषानालोकिनीत्यस्य दोषत्वेन तदनालोकिनीत्यर्थः । अत्र वृत्तौ परिचयपरिणामत्वं विवक्षणीयम् । तेन दृष्टौ निर्दोषविषयकाद्यपरिचये प्रेम्णि च नातिव्याप्तिः । सौहार्देऽपि हार्दाभिन्नतया न तथा । तयोर्विभिन्नजात्याश्रयत्वाभावात् । न च परिचयलक्षणस्यातिव्याप्तिः । पचियत्वस्य दृष्टीतरवृत्तित्वव्यापकत्वेन क्षत्यभावात् । उपधेयसङ्करेऽप्युपाधेरसङ्करात् ।

हार्दं यथा—

करुणातटिनीपूरपरिपूरितचेतसः ।
अपि सुव्यक्तकौटिल्यं जगदात्मसमं विदुः ॥

अत्र विशेष्यानुपादानमीदृशविशेषणव्यतिरेकेण तद्विशेष्या न जात्यादिभिः परिच्छेद्या इति गमयति ।

सौहार्दं हार्दान्न भिन्नमिति निरूपयति—

हार्दं निजेषु बहुलं सौहार्दमभिधीयते ।

हार्दमिति । तथाच विलक्षणवस्तुविषयकत्वेन हार्दमेव व्यपदेशान्तरं भजति न तु जात्यन्तरम् ।

---

(१) उदासीनेषु=हृदि प्रवेशनायोग्येषु ।

एतद्दर्शयति--

सम्पुटे रत्नमबला भाजने वाऽपिधानके ।
निवेशयतु को भेदो गुप्तव्यक्ततया तु सः ॥

सम्पुट इति । अत्राप्रस्तुतेन प्रस्तुतव्यक्तिः । ननु सौहार्दं न हार्दं पुत्रादिविषयकपित्रादिगतचित्तवृत्तेरपि पुत्रादिनिष्ठदोषावलोकित्वात् । अन्यथा पुत्रादिशासनानुपपत्तिरिति चेत्, न । दोषानालोकिनीत्यत्र दोषेऽपनेयत्वकामनाविषयदोषेतरत्वस्य विवक्षितत्वात् । हार्दे विशेष्याभावप्रयुक्तस्य सौहार्दे विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वादिति ।

एतदेव विदुः प्रेम भोगपर्यवसायि चेत् ॥ ९ ॥

एतदेवेति । एतदेव=सौहार्दव्यपदेशान्तरं प्राप्तं हार्दमेव । न त्वेतत्पदं सौहार्दपरम् । अस्वीयायामपि कान्तायां प्रेमोत्पत्तेः । ननु सौहार्दवत्प्रेमापि न जात्यन्तरम् । एतत्पदेन हार्दस्याभिधानात् । एवं च "प्रेमेत्यूर्मिपरम्परा" इत्यसङ्गतमित्यत आह-भोगेति । तथाच पूर्वोक्तं हार्दमेव भोगपर्यवसायित्वलक्षणपरिणामान्तरं प्राप्तं प्रेमपदार्थः । अन्यथा हार्दोत्पत्त्यनन्तरमेव भोगापत्तेः । अतः कामिन्यादिनिष्ठहार्दपरिपाक एव प्रेमेत्युच्यते । परिपाकश्च भोगपर्यवसायितेति ।

मतमेतद्दूषयितुं प्रथमं मतान्तरमाह-

संयोगेऽपि पदार्थस्य यद्वियोगोपलालनम् ।
शाण्डिल्यः सूत्रकृत्प्राह तदेव प्रेमसंज्ञकम् ॥ १० ॥

संयोगेऽपीति । वियोगोपलालनं=वियोगकृतावस्था । प्राहेति "योगे वियोगवृत्तिः प्रेमा" इति सूत्रेणेति शेषः । वृत्तिर्वर्त्तनं वियोगवर्त्तनमर्थात् पुंसः । वियोगस्य वा वर्त्तनमवस्थितिरिति तन्त्रामृतकारोऽत्र व्याचख्यौ ।

ननु योगकाले वियोगोपलालनमसङ्गतं विरोधादिति शङ्कायां प्राचीनोदाहरणेनोत्तरमाह-

अदृष्टे दर्शनोत्कण्ठा दृष्टे विश्लेषभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥११॥

अदृष्ट इति । अदृष्टो यथा न भवसि वियोगभयं च नोत्पद्यते तथा कुर्या इति व्यङ्ग्यमत्रास्फुटमस्तीति कैश्चिदुक्तम् । तत्तु वियोगभयं

प्राप्ताया आक्षेपरूपेयमुक्तिर्व्यङ्ग्यं विनापि पर्यवस्यतीत्युपेक्षणीयमित्याह भक्तिरत्नाकरे हरिदासः । तथाच विश्लेषाभावेऽपि विश्लेषभयमेव सूत्रकृता वियोगवृत्तिपदार्थोऽभिहित इति मन्तव्यम्। गुणाकरस्तु "योगे वियोगवृत्तिः प्रेम" इति सूत्रमर्थान्तरस्याप्युपलक्षकम् । तथाच योगे वियोगवृत्तिरिव वियोगेऽपि योगवृत्तिः प्रेमेति लभ्यते ।

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ।
नीयन्ते पथिकैः कथंकथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥

इति श्रीमज्जयदेवकविवरवदनवनरुहविलासितवचनमकरन्दामृतमुदाजहार ।

स्वमतमभिधायान्यमतं दूषयति--

न प्रेम्णः सर्वथा ज्ञेया भोगपर्यवसायिता ॥
शुकादयोऽपि श्रूयन्ते भगवत्प्रेमसङ्गताः ॥१२॥

न प्रेम्ण इति । प्रेम्णि भोग आनुषङ्गिको यदि स्यात्तदाऽऽस्ताम्। का क्षतिः। नचैतावता प्रेम भोगनियतम्। कुतःतत्राह-शुकादय इति। शुकादीनामपि योगकाले वियोगोपलालनं तु सम्भवतीति भावः ।

एतदपि मतं दूषयितुं मतान्तरमाह—

द्रवावस्थैव चित्तस्य प्रेमेति भरतोऽवदत् ॥ १३ ॥

द्रवेति । चित्तस्य=हार्दाकारेण परिणतस्य । तेन क्रोधादिसमुत्थद्रवे नातिव्याप्तिः ।

द्रवहेतुमाह-

जतुवत्कठिनं चित्तं स्वभावादथ तापकैः ।
योगाद्द्रवति तत्काले करणैरग्रहो मतः॥ १४ ॥

जतुवदिति । जतुवदित्यनास्थायाम् । मधुसिक्थवत्काठिन्यस्य वक्ष्यमाणत्वात् । द्रवतीत्यग्रेतनेनान्वयो वा । अथशब्दः स्वभावादित्यस्य कठिनमित्यत्र सम्बन्धार्थः । तत्काले=द्रवकाले। करणैः=इन्द्रियैः । अग्रह इति। इन्द्रियजन्यग्रहे कठिनचित्तसम्बन्धस्येन्द्रियेष्वपेक्षणात्। फलानुरोधित्वात्कल्पनायाः ।

तापकानाह—

कामक्रोधभयस्नेहहर्षशोकदयादयः ॥

तापकाश्चित्तजतुनस्तच्छान्तौ कठिनं हि तत् ॥ १५ ॥

काम इति । कामो=विषयभोगादिविषयेच्छा । स्नेहः=पुत्रादिगतो रागः । हर्षो=लाभादिजन्मा वृत्तिविशेषः । शोकः=अनिष्टप्राप्तिसमुत्थो वृत्तिविशेषः । दया=दीनदशावलोकनजन्योऽनुकम्पेति व्यपदेशयोग्यश्चित्तवृत्तिविशेषः । आदिना वक्ष्यमाणप्रेमभेदोपयोगितापकानां परिग्रहः । तच्छान्तौ=तापकानां निवृत्तौ ।

ननु तार्किकादिभिश्चित्तस्य निरवयवत्वोपगमात् कथमवयवशैथिल्यात्मा द्रव इत्यत आह-

चित्तं सावयवं तेन द्रवतीति किमद्भुतम् ॥ १६ ॥

चित्तमिति । तेन=हेतुना ।

एकैकभूतसत्त्वांशैरेकैककरणोदयः ।

तैरेव मिलितैरन्तःकरणोत्पत्तिरुच्यते ॥ १७ ॥

एकैकेति । करणोदयो=ज्ञानेन्द्रियोदयः ।

ननु पृथिव्यादित्रयाणामेव द्रवो गुण इति सिद्धान्तेन विरोध इत्याशङ्क्य नायं गणनीय इत्यभिप्रायेण समाधत्ते—

पृथिव्यादित्रयस्यैव द्रवो नान्यस्य कस्यचित् ।

इति मन्त्रेण बध्यन्ते वासनाभूतवासिताः ॥ १८ ॥

पृथिव्यादीति । नास्मन्मतमेतदिति भावः ।

ननु द्रवश्चेतसि भवतीत्यत्र किं मानमित्याशङ्क्य कार्येणानुमीयत इत्याह—

द्रवत्ववेदनोपायानाहुः स्वेदादिकान् बुधाः ॥ १९ ॥

द्रवत्ववेदनेति ।

प्राचीनकारिकया तान् रूपयति—

स्वेदः स्तम्भोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।

वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ २० ॥

स्वेद इति । प्रलयो=मूर्छा । ननु स्वेदादिभिर्द्रवानुमानं स्वकपोलकल्पितमिति चेत्, शृणु ।

तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्षः ॥

इत्यादिना तथाभिधानात् । अत्र विकारो द्रवः ।
क्रियान्तरेणापि द्रवोऽनुमीयत इत्यभिप्रेत्याह—

मृतवत्सीयनिःसारचर्मालोकनविक्रमात् ।
अप्यल्पदुग्धा दुह्यन्ते पशवो बालिशैरपि ॥ २१ ॥

मृतेति । विक्रमोऽत्र द्रवः । बालिशैः=दोहनप्रकारमजानद्भिः ।

ननु द्रवो मोह एव न त्ववयवशैथिल्यात्मातिरिक्तः । मानाभावात् । स्वेदादिभिरपि स एवानुमीयतामत आह—

स्वेदादि मोहकार्यं न मोहिनि क्वाप्यदर्शनात् ॥ २२ ॥

स्वेदादीति ।

ननु तापकानामेवाहत्य स्वेदादिकं कार्यं भवतु किमन्तर्गडुना द्रवेणेत्यत आह—

कामादिभिर्यदाकारं क्रियते तत्कथं मनः ॥
पूर्वाकारपरित्यागमन्तरेण स तु द्रवात् ॥ २३ ॥

कामादिभिरिति । सः=पूर्वाकारपरित्यागः ।

ननु पूर्वाकारपरित्यागोऽपूर्वाकारार्थः । स एव किमर्थः । तत्र प्राचीनकारिकाभिरुत्तरमाह—

तदाकारं न चेच्चित्तं तदा तद्भासकं कथम् ।
मूषासिक्तं द्रुतं ताम्रं तन्निभं जायते यथा ॥ २४ ॥
घटादीन् व्याप्नुवच्चित्तं तन्निभं जायते तथा ॥
व्यञ्जको वा यथा लोके व्यङ्ग्यस्याकारतामियात् ॥२५॥
सर्वार्थव्यञ्जकत्वाद्धीरर्थाकारा प्रदृश्यते ॥
आस्तामतिप्रसक्तेन प्रकृतार्थमहं ब्रुवे ॥ २६ ॥

आस्तामिति । तदेवाह—

द्रवीभूतेन चित्तेन यद्वस्तु परिगृह्यते ।
स ग्रहो भावना नाम सद्योविश्रान्तिबीजभूः ॥ २७ ॥

तापकसामान्यद्रुतचित्तकर्तृकग्रहः सामान्यतो भावनापदार्थः ।

भावनाविशेषपदार्थमाह—

स्नेहोदितद्रवोत्पन्ना गीयते प्रेमभावना ॥

स्नेहेति । इदानीं तस्या एवावस्थान्तरतो नामान्तरमित्याह—

दलितं भावनाधाराऽभिन्ना प्रेमसमाधिना ॥ २८ ॥

दलित इति । वक्ष्यमाणदलितावस्थायां भावनापङ्क्तिर्वृत्तिरूपसम्प्रज्ञातप्रेमसमाधिपदवाच्येत्यर्थः।व्यक्तीभविष्यति चेदमुपरिष्टात्। भावनाधारा तु भावनाया बहुकालचुम्बिता, नतु व्यक्तिपरम्परा । गौरवात् ।

ननु द्रवेणैव कृतार्थतास्तां किमाकारेणेत्याह—

स्वकीयविषयाकारसम्पत्त्यै जनितो द्रवः ।
तापकैस्तेन नो वाच्यं द्रवेणैव कृतार्थता ॥ २९ ॥

स्वकीयेति । द्रवेणैव=तापकविषयाकारमनवाप्तेनैव ।

युक्त्यन्तरमाह—

स्नेहोदितद्रवोत्पन्नभावनामय एव यः ॥
स एव विषयो लोके शर्मदो न बहिस्तनः ॥ ३० ॥
यतोऽयमीशसृष्टोऽस्ति न दुःखसुखकारणम् ।

स्नेहेति ।

ईशकृते विषये समानेऽपि जीवकृतमेव नानात्वमिति प्राचीनश्लोकेन दर्शयति—

परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ॥
कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥

परिव्राडिति ।

लोकानुभवमपि प्रमाणयति—

दूरस्थिता सन्निधिगा निजाङ्कस्था मनोमयी ॥
क्रमेण लोके दृश्यन्ते कामिन्यः कामिनां प्रियाः ॥३२॥

दूरस्थितेति ।

ननु तर्हि मनोमयकामिन्यादिभिरेव निर्वाहसम्भवे किं बाह्यप-

दार्थकल्पनेनेत्यत आह—

मनोमयस्य सम्पत्त्यै बाह्यापेक्षा न तु स्वतः ॥ ३३ ॥

मनोमयस्येति ।

हन्त कथमस्य तापकमन्तरेण घटाद्याकारता तत्राह—

मधुसिक्थकठोरेऽस्मिन्नुपमर्देन चेतसि ॥

घटाद्याकारतापि स्यादन्तरेणापि तापकम् ॥ ३४ ॥

मध्विति। मधुसिक्थवत्कठोरे चेतसि विनापि तापकं विषयान्तरसम्पर्करूपोपमर्देन तापकाविषयभिन्नविषयाकारतापि स्यात्, न तु विषयान्तराकारतासम्पत्त्यै तापककृतद्रवजनितकाठिन्यनिवृत्तिरपेक्षितेत्यर्थः । अत एवोक्तमभियुक्तैः—"चेतसि द्रुते भगवदाकारो भक्तिरद्रुते तु स ज्ञानम्" इति ।

पूर्वमतं दूषयति—

लाघवात्प्रेम वक्तव्यं वियोगस्योपलालनम् ॥ ३५ ॥

लाघवादिति ।

हार्दाद्युदितवियोगकालीनवियोगोपलालनेऽतिव्याप्तिवारणाय तथोक्तमिति चेत्, तत्राह—

येनोपलालनं प्राहुर्वियोगस्य बुधोत्तमाः ॥

तदेव प्रेम वक्तव्यं न वियोगोपलालनम् ॥ ३६ ॥

येनेति। यथा हार्दोदितावियोगावस्था हार्दफलं न हार्दं तथैतदपि वाच्यमिति भावः ।

वियोगोपलालनफलोपधायकतां प्राप्तं हार्दमेव प्रेम, तामप्राप्तं च शुद्धं हार्दमिति केषांचिद्वियोगोपलालनमित्यत्र बहुव्रीहिं कृत्वा हार्दांशे वियोगोपलालनोपधायकत्वलाभेन शाण्डिल्यसूत्रकृन्मतं समर्थयतां मतमनूद्य दूषयति—

फलेन विप्रलम्भोपलालनेन समायुतम् ॥

हार्दं प्रेमेति नो वाच्यं यतो हार्दफलं न तत् ॥ ३७ ॥

फलेनेति ।

कुतस्तत्राह—

न जायते तदुत्पत्तिर्हार्द्दोत्पत्त्युत्तरक्षणे ॥
हार्द्दीयपरिपाकस्य फलं तच्चेत्स एव कः ॥ ३८ ॥

न जायते इति । स एव=परिपाक एव ।

अतः स्वमतमुपसंहरति—

अतो हार्द्दपरीपाको द्रवस्तत्प्रेम कथ्यते ॥

अत इति ।

इदमपि मतं दूषयितुं गुप्तपादाचार्यमतमाह—

इच्छाविशेषः प्रेमेति गुप्तपादार्यसम्मतम् ॥ ३९ ॥

इच्छेति ।

इच्छाविशेषः प्रेमेत्यत्र विशेषपदार्थं दर्शयति—

काम्यलाभेऽपि यस्तात्रन्न निवर्त्तेत कर्हिचित् ॥
विवर्द्धते प्रत्युत स्यान्ममेतिवचनोदितः ॥ ४० ॥

काम्येति। काम्यो=विषयः । तथाच यादृशेच्छा विषयलाभेऽपि न निवर्त्तते तादृशेच्छायां विषयलाभानिवर्त्यत्वमिच्छागतो विशेषः । वचनं=वाक्यम् । भक्तिचिन्तामणौ तु "योगे वियोगवृत्तिः" इति सूत्रस्य वियोगोपलालनहेतुभूता चित्तवृत्तिरित्यर्थं विधाय प्रागुक्तेच्छा सूत्रार्थ एवेति विवृतम् ।

एतन्मते हार्द्दपदार्थं निरूपयति—

दोषदर्शननाश्यस्तु स हार्द्दमभिधीयते ।

दोषेति । सः=इच्छाविशेषः ।

अयं च न केवलं विषयप्राप्तिनाश्य इत्याह—

अपि तद्विषयालाभे नश्येद्दोषावलोकनात् ॥ ४१ ॥

अपीति । तदिति कर्त्तृ । विषयलाभे तु नश्येदेवेति सूचकोऽपिशब्दो विषयालाभ इत्यत्र सम्बध्यते । दोषावलोकनात्=हार्द्दविषयनिष्ठदोषाणां ज्ञानादित्यर्थः ।

हार्द्दात्सौहार्द्दस्यास्मिन्पक्षे भेदमाह—

दोषदृष्ट्या न यस्यास्ति नाशस्सौहार्दमेव तत् ॥
केवलं विषयप्राप्तिनाश्यमेतन्निगद्यते ४२ ॥

दोषेति । तथाच विषयलाभमात्रनाश्येच्छा सौहार्दमिति लक्षणं पर्यवसितम् ।

नन्वेतल्लक्षणमयुक्तम् । पुनर्विप्रलम्भे पुनर्दुःखोदयादत आह--

स्वरूपे नानुरागस्य विषयप्राप्तिनाश्यता ॥
किन्तु तत्कार्यसन्दोहे विश्लेषसमयोदिते ॥ ४३ ॥

स्वरूप इति । तथाच विरहावस्थोदितानामनुरागकार्याणां रोमाञ्चाश्रुपातादीनां प्रतिबन्ध एव विषयप्राप्तिनाश्यत्वम् । एतन्मतानुसारिणा गुणाकरेणापि भावचन्द्रिकायां हार्दसौहार्दयोर्लक्षणमुक्तम्-"दोषदर्शनापनेयश्चित्तवृत्तिविशेषो हार्दमगणनीयदोषदर्शनश्चित्तवृत्तिविशेषः सौहार्दम्" इति । तत्र सौहार्दं यथा—

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥

अत्र शरीरदोषदर्शनं न शरीरविषयकचित्तवृत्तिविशेषमपनयति । यथा वा—

प्रियं तु पृष्ठतः कृत्वा विधाय तनुविस्तृतिम् ।
सज्जचापस्य लुब्धस्य पुरोऽभूच्चक्रकामिनी ॥

अत्र स्वापकाररूपदोषदर्शनं न प्रियाविषयकं चित्तवृत्तिविशेषं रुणद्धि । नचेदं प्रेम, प्रेमात्मकचित्तवृत्तौ तादृशदोषदर्शनस्याप्यनुचितत्वादिति सोपपत्तिकमुदाहृतम् । नात्र स्वापकाररूपदोषदर्शनमुक्तमस्तीति चिन्तनीयमेतदिति गुणाकरः ।

ननु सर्वत्रेच्छाया विषयलाभनिवर्त्यत्वमिति सिद्धान्तात् कथमेतदित्याशङ्कायां नायमनुभवं स्पृशतीति श्लोकेन दर्शयति--

वदामि कतमां तन्वीं का मदीये हृदि स्थिता ॥
दृष्टेऽपि कृष्णे तृष्णेयं लोचने न विमुञ्चति ॥४४॥

वदामीति । एवं चेच्छाया विषयलाभनिवर्त्यत्वं प्रेमात्मकेच्छातिरिक्तेच्छासु, न तु सर्वत्र, युक्तेरनुभवाबाधकत्वादिति भावः । विवर्द्धत इत्यस्योदाहरणम्—

यथा,

सङ्कल्पैकमये सदैव सविधे कृष्णे पुरःस्थायिनि
ज्वालाजालनिकामदग्धहृदये कोऽयं वियोगज्वरः।

तत्राप्युन्मददूतिकासु विनतिर्दीना च वाक् प्रायशः
प्रेम्णः क्षारमयादुदेति कथनायोग्यः पिपासाभरः ॥

यथा वा--

तव दूरस्थितः पुत्रो द्रष्टव्य इति वासना ।
वीक्षितेऽपि पुनर्वीक्ष्य इति मे जायते स्पृहा ॥

अत्र यशोदां प्रति गोपिकाया उक्तिः ।

द्रवः प्रेमेति मतं निषेधति—

द्रवहेतुरयं प्रेमा न पुनर्द्रवतां गतः ।

द्रवेति ।

कुतस्तत्राह—

प्रेमकार्यं यथा प्रोक्तं विप्रलम्भोपलालनम् ॥ ४५ ॥
तथा द्रवोऽपि वक्तव्यो न तु प्रेममयो हि सः ॥

प्रेमेति । सः=द्रवः । तथाच वियोगोपलालनात्मकं प्रेम भवता यथा नेष्यते तथा द्रवरूपमपि तन्नेष्टव्यम् ।

एवं प्रतिबन्दीमभिधायोक्तिमपि प्रमाणयति--

बत का सास्ति सुमुखी यच्चेतः प्रेम चुम्बति ॥ ४६ ॥
शतधा नेह भिद्येत स्मरोऽप्येवं वदिष्यति ॥

बतेति । अत्र शतधाभेदो द्रवः । वदिष्यतीति काकुः ।

द्रवपक्षे दोषान्तरमप्याह--

प्रेम्णः सविषयत्वेन प्रसिद्धेर्न द्रवात्मता ॥ ४७ ॥

प्रेम्ण इति । एतेन प्रेम चुम्बतीतिपदे प्रेमपदस्य स्नेहरूपतापक-परत्वेन दोषोद्धारेऽपि न क्षतिः ।

ननु कामिन्यां दोषज्ञानात्पूर्वं प्रेमोत्पन्नम् । अनन्तरं दोषदर्शनेन विषयलाभेन वा नष्टमिति लोके दृष्टम् । प्रेम्ण उक्तरूपत्वे विरुद्धमत आह--

कामिन्यामुदितो रागो नश्येद्दोषावलोकनात् ॥
यदि स स्यात्तदा हार्दसंज्ञो न प्रेमशब्दभाक् ॥ ४८ ॥
कामिनीप्राप्तिनाश्यश्चेत्सौहार्दमभिधीयताम् ॥

कामिन्यामिति ।

हार्दसौहार्दवैलक्षण्येन प्रेम निरूपयति—

तदनाश्यः प्रेमनामा दुर्लभो वागगोचरः ॥ ४९ ॥

तदनाश्य इति । ताभ्यां=दोषदर्शनविषयलाभाभ्यामनाश्यः । तत्र दोषदर्शनानाश्यत्वं तु दोषाणामनवलोकनादेव । न तु सौहार्द इवानाहार्यं दोषदर्शनम् । एवं च—

"मायिनस्तस्य जानामि चरितान्यखिलान्यपि ।
तथापि निस्त्रपं चेतस्तं न मुञ्चति मामकम् ॥"

इति राधोक्तिः, "मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य" इति सीतोक्तिश्चाहार्यदोषदर्शनमूलैव ।

गणयति गुणग्रामं क्रोधं भ्रमादपि नेहते
भ्रमात्=सापराधजनतादात्म्यभ्रमादपीत्यर्थः ।
वहति च परीतोषं दोषं विमुञ्चति दूरतः ।
युवतिषु चलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामः करोति करोमि किम् ॥

इति पद्ये श्रीजयदेवो गोपीनां भगवति दोषदर्शनमाहार्यमेवेति स्फुटमावेदयतिस्म । अत एव कश्चित्कविवरो ऽनाहार्यदोषदर्शनपरिपन्थिनं प्रेमविषयदोषाभावदर्शनं सीतोक्तिमुखेन व्यक्तीचकार । यथा—

रघुकुलजनुषामयं न पन्थाः परिहरणं निरुपाधिकप्रियायाः ।
रघुकुलतिलके तु कः कलङ्कः समजनि जन्म ममैव पापपङ्के ॥

इत्यादौ ।

वागगोचर इति । इतरविषयकामितरानिष्ठं प्रेमेदमित्थतयानुमाय तत्रेदं प्रेमेतिव्यपदेशो विज्ञेनापि सर्वथैव निराबाधं कर्तुं न शक्य इति भावः ।

प्रकारान्तरेणापि हार्दसौहार्दवैलक्षण्यं दर्शयति—

नादोषे पक्षपातोऽस्ति न लाभे कृतकृत्यता ।

नेति । प्रेम्ण इति शेषः ।

अधिकारितोऽपि प्रेम्णि तद्वैलक्षण्यं दर्शयति—

भयं भजति यो मन्दः कल्पान्तज्वलनादपि ॥ ५० ॥
मृणालजिन्मना नापि स हि प्रेम स्पृशेत्कथम् ॥

भयमिति ।

अस्य फलितमाह—

प्रेम्णस्तेन कथङ्कारमनन्ते विषये स्थितिः ॥५१॥

प्रेम्ण इति । स्थितिरिति आश्रयितया विषयितयेति वा । हार्द-स्य पूर्वविषये दोषदर्शनेन विषयान्तरेऽवस्थानम् । एवं सौहार्द-स्यापि विषयलाभेनोत्कण्ठानिवृत्त्या विषयान्तरे गुणावलोकन-निबन्धनमवस्थानम् ।

नन्वखिलगोपीगोचरहरिनिष्ठरागस्य का दशेति शङ्कायामाह—

सौहार्दमेव गोपीषु लीलारब्धतनोर्विभोः ॥

सौहार्दमिति । एवकारात्कर्मपरतन्त्रजीववन्न प्रेम । अत एव—

"वल्लवीवृन्दविहितप्रेम्णामव्याजजन्मनाम् ।
नाधमर्ण्यपरीहारश्चपले मयि कर्हि चित् ॥"

इति तन्त्रामृतधृतवचने चपलविशेषणान्मयि वल्लवीनामेव वल्ल-वीषु मम न प्रेम किन्तु सौहार्दमिति भगवदाशयं विशदयन् हरि-दासः प्रेम्णो विषयततिचुम्बिता नास्तीति स्वाशयमाविश्चकार । अव्याजजन्मनां=फलाभिसन्धानरूपव्याजजन्यहार्दसौहार्दजातीयभि-न्नानाम् । गुणाकरोऽप्यमुमेवार्थं स्फुटमाचख्यौ—

"वर्णनीयं सुकविभिः प्रियप्रेमैव योषिति ।
तच्च नानेकविषयं रसाभासप्रसक्तितः ।
रसाभासोऽपि तद्रूपहानेर्न पृथगिष्यते ॥"

इत्यनेन ग्रन्थेन । तद्रूपहानेः=प्रेमस्वरूपस्यैकविषयत्वस्यानुपप-त्तेरित्यर्थः ।

पक्षान्तरमप्याह—

अस्तु वा जीवगे प्रेम्णि नियमोऽयं न चेशगे॥ ५२ ॥

अस्तु वेति । अयम्=एकमात्रविषयचुम्बित्वरूपः ।

नन्वेवं "वल्लवीवृन्द" इतिश्लोकस्य का गतिस्तत्राह—

तन्त्रामृतधृतोक्तेस्तु प्रशंसापरतोचिताम् ॥

तन्त्रामृतेति । स्वमात्रविषयकप्रेमशालिनीनां गोपीनां प्रशंसापर-मेतदितिभावः ।

एतादृशमेव वागगोचरत्वमिहाभिमतमित्यभिसन्धायाह—

प्राकृतानां मदान्धानां सुजनानां च धीमताम् ॥
भ्रमोऽस्य कामिनीवृत्तिसौहार्दं तासु वृत्तिषु ॥ ५३ ॥

प्राकृतानामिति । प्राकृतानाम्=इङ्गितमप्यजानताम् । मदान्धानाम्=तज्ज्ञानतामपि प्रमादिनाम् । सुजनानाम्=तथाविधानामप्रमादिनाम् । धीमतां=प्रेमानुभवशालिनामपि । अस्येति विषयत्वे षष्ठी । तथा चेतरजनविषयासु कामिनीजनानिष्ठासु दृष्टिपरिचयहार्दसौहार्दवृत्तिषु क्रमेण प्राकृतादीनां तादात्म्येन प्रेमभ्रम इत्यर्थः ।

ननु धीमतामपि कथं प्रेमभ्रमस्तत्राह—

सौहार्दगताचिन्हानां प्रेमकाले विलोकनात् ।
अतो विमुह्यति प्रायः प्रेमानुभवभागपि ॥ ५४ ॥

सौहार्देति । कदाचिद्विषयाबाधे सति दैवात्प्रेमानुमाने प्रामाणिकेऽपि नानुमातुस्तत्कौशलं घुणाक्षरविधातृकीटवदिति ज्ञापनाय प्राय इत्युक्तम् । विमुह्यति=अयमेतद्विषयकप्रेमभागिति तत्त्वतो न जानातीत्यर्थः ।

प्रकारान्तरेण वागगोचरत्वं विशदयति—

एतद्विवृतिकृद्धन्यः किं वाच्यो योऽमुना वृतः ॥ ५५ ॥

एतदिति ।

ननु दृष्टदोषस्य विषयस्य लाभेऽपि यत्र रागो दृश्यते तत्र स रागो न हार्दं दोषदर्शनानाश्यत्वात् । अत एव न प्रेमा नापि सौहार्दं विषयलाभानिवर्त्यत्वात् । अतो रागावान्तरभेदोऽन्योऽपि स्वीकार्य इत्यत आह—

दृष्टदोषेऽपि विषये लब्धेऽप्युत्सुकता यदि ।
तर्हि सौहार्दपाकः सा यच्चिरं नावतिष्ठते ॥ ५६ ॥

दृष्टेति । यस्मात्कारणाद्विषयप्राप्तौ कंचित्कालमेवोत्सुकताया दर्शनं तस्मात्सौहार्दस्यैव पाकः ।

ननु चिरमवस्थानं यदि स्यात्तर्हि का गतिस्तत्राह—

चिरमुत्कण्ठता दोषदृष्टिश्चेति तु साहसम् ॥

चिरमिति । यदि विषयप्राप्तौ चिरमुत्कण्ठायाः सत्त्वं तर्हि दोषदर्शनमेव न सम्भवतीति भावः ।

एतस्यैव दशां प्राहुर्द्रुतव्याप्तिं विपश्चितः ॥ ५७ ॥

एतस्यैवेति । एतस्य=सौहार्दपाकस्य । द्रुतं=शीघ्रं व्याप्तिः अर्थात् परकीयदुःखस्य ।

सा व्यतिरेकमुखेन यथा--

म्लायति नाप्तमित्रः प्रत्युत संवीक्ष्य दुःखितं हृष्टः ।
कोके कृतबहुशोके विकसितवक्त्राणि कुमुदानि ॥

यथा वा—

क्षेमभागहितकंसविपक्षे क्षेपणक्षमभुजः सह पित्रा ।
बन्धुना च विजयी तव सूनुः खेदलेशमपि मुञ्च यशोदे ! ॥

अत्र मथुरातः समागतायाः क्षेमभागितिपदस्य प्रथममुपन्यासादनुभूतसौहार्दपाकायाः कस्याश्चिद्यशोदां प्रतीयमुक्तिः ।

अपरं वा-

दृष्टा सा महसां राशिः स्वामिदूतकृते यया ।
अदायि मेदिनीमात्रे स्वनेत्रविरहः क्षणम् ॥

अत्र श्रीरामं प्रति हनूमद्वाक्ये हनूमति सौहार्दपाकः प्रतीयते । गोविन्दचक्रवर्तिनस्तु प्रेमकलिकायामिदमाहुः ।

"बाढव्यसनसाहस्रसम्पातेऽपि निरन्तरम् ।
न हीयते यदीहेति साधु तत्प्रेमलक्षणम् ।" इति ।

बाढव्यसनसम्पातो विषयगतानाहार्यदोषदर्शनेनान्येन वा हेतुनेत्यत्र नाग्रहः । "पुनरपि मनो वामं कामः करोति करोमि किम्" इत्याद्यभियुक्तोक्तेः । नचात्र दोषदर्शनमाहार्यमिति वाच्यम् "युवतिषु चलत्तृष्णे" इत्यादिना दुःखोदयस्याभिधानात् । नहि दुःखोदयोऽनाहार्यदोषदर्शनं विना सम्भवति । प्रेम्णि दोषदर्शनाङ्गीकारेऽपि बाधकाभावात् । अत एव-

"नार्य एव जगत्यस्मिन्विन्दन्त्यार्योचितां क्रियाम् ।
अपि यन्मलिनं स्नेहकृतं लोचनयोः कृतम् ॥"

इत्यादि सङ्गच्छते ।

"कुञ्जो नाभिगृहं कलिन्दतनया कुल्या कुले कालिमा
कीर्त्तिः कैतवमार्यता कटुगिरश्चाटूनि कष्टं सुखम् ।

ज्यौत्स्नी चापि कुहूरमन्यत कुहूर्ज्यौत्स्नी मया यत्कृते
तस्यालि ! प्रतिपत्तिशालिमनसो दासीरतिः श्रूयते ॥"
इत्यादिष्वनाहार्यमेव दोषदर्शनम् । उदाहरन्ति च-
"वल्लव्याः कान्तरुद्धाया मनः कृष्णैकलोलुपम् ।
असूनग्रेसरान् कृत्वा रासवासमशिश्रियत् ॥"

हन्तैवं कथमनासादितव्यसनायामीहार्थां प्रेमता । सत्यम् । व्यसनसमुच्छेद्येच्छाभिन्नेच्छा प्रेमेति तन्निष्कर्षात् । हार्दादिव्यपदेशास्तु तदुच्छेद्याया एवेच्छाया इति श्लोकार्थं स्वयमूचिरे । हरिदासस्तु दोषोऽपि प्रेमाविषये द्वेषाजनक इत्यर्थः । विपद्यदोषदर्शनं दोषदर्शनाभाव एव पर्यवस्यतीति प्रेम्णि दोषदर्शनं नास्तीति वदतो गुप्तपादाचार्यस्य मतं नायुक्तमित्याह । परमानन्दठक्कुरास्तु प्रेमचन्द्रिकायामन्यथा प्रेमलक्षणं सम्बभाषिरे । तद्यथा—

वस्तुव्यापारविषया समीहा हार्दशब्दभाक् ।
वस्तुमात्रावलम्बा तु प्रेमेति पदवीं गता ॥

वस्तुव्यापाराः=वस्तूदयस्थितिवीक्षणग्रहणादयः । तथाच वस्तुव्यापारविषयिणीच्छा हार्दं, वस्तुमात्रगोचरा वचनानर्हा तु प्रेम । यथा—

व्रजमन्दिरतल्पाङ्कवक्षोनयनमानसे ।
अपि स्थितं सुतं गोपी चित्रं कामयते मुहुः ॥

एतन्मतमतिसूक्ष्ममतिगोचरतया चिरपरिचयचार्वीति प्रतिभाति ।

ननु पामराणां पुत्रादिषु सुकृतिनां लीलाविग्रहेषु ज्ञानिनां भूमानन्दे प्रेमोत्पत्तिदर्शनात् कोऽस्य विषयो नियत इत्याशङ्कायामाह—

**नैतस्य विषयः कोऽपि नियतो हार्दजन्मनः ॥ ९८ ॥**

नैतस्येति । एतस्य=प्रेम्णः । हार्दजन्मन इति हेतुगर्भं विशेषणम् । तथाच कारणस्य हार्दस्यैव यत्र विषयो न नियतः तत्र किं वाच्यं कार्यरूपस्य प्रेम्णो विषयो नियतः स्यादिति ।

ननु पुत्रादिविषयकप्रेम्णां भगवद्विषयकप्रेम्णां च किमेकजातीयता उत भिन्नजातीयता । नाद्यः ।

स्नेहस्य तस्य धिक्कारो यो न चुम्बति केशवम् ।
स दग्धचरणः क्रोधो यो न स्पृशति कापथम् ॥

इत्यादौ भगवद्विषयस्नेहोत्कर्षस्य विषयस्नेहापेक्षया प्रतीतेः । न

द्वितीयः । कारणवैलक्षण्यं विना विजातीयवस्त्वनुत्पादात् । अत आह—

न प्रेम भिद्यतेऽन्योन्यं कार्यकारणजातिभिः ।
प्रेमोत्कर्षापकर्षौ तु विषयैकनिबन्धनौ ॥ ५९ ॥

न प्रेमेति । कार्येण=अश्रुपातादिना । कारणेन=हार्देन ।जात्या स्वरूपत एकमेव। विषयेति । विषयोत्कर्षापकर्षाभ्यां प्रेमोत्कर्षापकर्षावित्यर्थः।

एतदेवोपपादयति—

ब्रह्मण्याविष्टचित्तानां सर्वदानन्ददर्शनम् ।
पुत्रादिसक्तचित्तानां तापश्रेणीति दृश्यते ॥ ६० ॥

ब्रह्मणीति ।

ननु विषयवियोगकृत एव यदि प्रेम्ण्यपकर्षस्तदा श्रीकृष्णवियोगिनीनां तद्विषये प्रेम्ण्यपकर्षापत्तिरत आह—

गोप्यः कृष्णवियोगिन्य इति कस्तत्त्वतो वदेत् ॥

गोप्य इति ।

नन्वेतत्पुराणविरुद्धमित्याशङ्क्यं भक्तनिरूपणेन निराकरोति·

भक्तश्चतुर्द्धा गदितः कृष्णकल्पद्रुमादिषु ॥ ६१ ॥

भक्त इति ।

कृष्णकल्पद्रुमस्थकारिकामुखेन भक्तलक्षणोदाहरणे विभजते·

नित्यं प्रेमपरीतात्मा कदाचित्प्रेममोहितः ।
कृत्रिमप्रेमयुक्तश्च प्रेमोदारश्चतुर्थकः ॥ ६२ ॥
चत्वारः प्रेमभक्ताः स्युस्तत्राद्यो गोपिकागणः ।
नैतस्य विप्रलम्भोऽस्ति कृष्णप्रेमसमाधिना ॥ ६३ ॥
द्वितीयः शुकदेवादिः समाधिच्छेददर्शनात् ।
ईशप्रेम्णि हठाच्चित्तं चिरं येन निवेश्यते ॥ ६४ ॥
स स्यात्तृतीयः सोऽपि स्यात् द्विविधस्तत्र चादिमः ।
विषयस्य विरोधेनाविरोधेनापि चेतरः ॥ ६५ ॥
प्रह्लादादिमुखस्त्वाद्यो ह्यर्जुनादिस्तथा परः ।
गोपीमुखानामुक्तानां मध्ये नैकतमोऽप्यहम् ॥ ६६ ॥

इति शोचति यो नित्यं प्रेमोदारः स उच्यते ।
यथा युधिष्ठिरो राजेत्येवं भक्तचतुष्टयम् ॥ ६७ ॥ इति ।

नित्यमिति । नित्यसमाधियुक्तानां गोपीनां व्यवहारनिष्पत्तिर्भगवतैव परमकारुणिकेन निर्वाह्यते । तासु भूतावेशन्यायेन प्रवेशोपगमात् । न चात्र मानाभावः ।

"नित्यमेव निमग्नास्ताः कृष्णप्रेमसमाधिषु ।
न कदापि वियुज्यन्ते गोप्यो विरहभीरवः ॥"

इत्यादिनारदपञ्चरात्रागमात् ।

नेमं विरिञ्च्य इत्यत्र प्रसादोऽप्येष उच्यते ॥

नेममिति ।

"नेमं विरिञ्च्यो न भवो न श्रीरप्यङ्गसंश्रया ।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदात् ॥"

इतिश्लोके । एषः=भगवद्विषयनित्यप्रेमसमाधिरूपः । भगवत्कर्तृकानुराग एवात्र प्रसाद इति चेत्, अस्तु नाम नित्यप्रेमसमाधिहेतुः। न त्वत्र प्रसादपदस्यासावर्थः । गोपीकर्तृकस्य तस्याभिधानात् । तथाच भगवत्कर्तृकानुरागफलीभूतो गोपीकर्तृकप्रेमजन्यभगवद्विषयकसम्प्रज्ञातो वक्ष्यमाणरीत्या तथाविधसम्प्रज्ञातफलीभूतोऽसम्प्रज्ञातो वा समाधिः प्रसादपदस्यार्थ इति ध्येयम् । शुकादीनां नित्यप्रेमसमाधौ मानाभावात भगवद्गुणानुवादित्वश्रवणाच्च द्वितीयभक्तकोटौ निवेशः । विषयस्येति । विषयभोगावसरप्राप्तौ विषयोऽयं मामनर्थं पातयिष्यतीति धिया विषयस्य तिरस्कारो विषयस्य विरोधः विषयभोगो विषयस्याविरोधः । प्रेमोदार इति । उदारता च गोप्यादिसकलभक्तजनप्रेमावस्थाकर्णनमात्रसमुद्भूतबहलरोमाञ्चाश्रुपातादिसंभ्रमम् ।

स्यादेतत् । द्वितीयभक्तकोटिप्रविष्टानां गोपीतरकामिनीनां भगवद्विषयके प्रेम्ण्यपकर्षापत्तिरत आह—

उत्तमे वस्तुनि प्रेमा योऽस्ति तस्यैव वृद्धये ॥ ६८ ॥
वियोगो दुःखयोगस्तु नान्तरीयकतां गतः ॥

उत्तम इति । तथाचोत्तमे वस्तुनि वियोग उत्तमविषयकप्रेमोत्क-

षार्थमेव नापकर्षार्थम् । दुःखयोगस्तु नान्तरीयकतया बलवद्द्वेषाविषयः ।

नन्वेवं पुत्रादिगतवियोगेऽपि तुल्यं तत्राह—

अनुत्तमेऽथ योगेन बहुलं प्रेम जन्यताम् ॥ ६९ ॥
नैतावता तदुत्कर्षो दुःखमात्रफलं यतः ॥

अनुत्तम इति । तदुत्कर्षः=प्रेमोत्कर्षः । तथाचोत्कर्षो न बाहुल्यं किन्तु भवबन्धननाशकत्वं तद्व्यतिरेको दुःखैकमात्रफलकत्वं वापकर्षः प्रेमगत इति ध्येयम् ।

अतो वियोगे गोपीनामित्युक्तावपि का क्षतिः ॥ ७० ॥

अत इति ।

प्रसङ्गादाह—

उत्पत्तावस्य विश्लेषो जीवानां जीवितावधिः ।
प्रायशो वा व्यवहृतौ वैमुख्यं मरणावधि ॥ ७१ ॥

अस्य=वक्ष्यमाणस्य ललितोत्तरस्य दलितप्रेम्णः । विश्लेष इति । प्रेमविषयविश्लेषो निरतिशयदुःखपरम्पराविधानद्वारा जीवितावधिर्न तु प्रेमावधिः । यथा—

साकारमेव गुरुलोकविलोचनेभ्यो
रक्षत्यसून्न तु पुनः स्मरसायकेभ्यः ॥
कार्श्यं तनौ वितनुते न पुनस्त्रपाया—
मन्तं गमिष्यति न तु प्रणयावहेलाम् ॥

प्रणयोऽत्र प्रेमा । दशरथोऽनिरुद्धो गोपी च व्यक्तमेवोदाहरणम् ।

यथा वा—

त्यजन्ति तृणवद्देहं विश्लिष्टे जीवितप्रभौ ।
तासामनुमृतेर्व्यासश्चकार सकलां स्तुतिम् ॥

अपरं वा—

सा साधुरेव यन्नाथ ! प्रयाता तव पृष्ठगाः ।
अभवन्क्षेमदानाय तस्या एवासुवायवः ॥

अत्र वल्लवीं कामपि स्तुवन्तं तन्मृतिमजानन्तं श्रीकृष्णं प्रति गोकुलादागतस्योद्धवस्योक्तिः । नाथपदेन स्वनिमित्तकपरप्राणापगमेऽपि प्रभूणां न कापि क्षतिरित्यर्थो व्यज्यते । हार्दविषयाचिरविश्ले-

यस्तु हार्द्रविधिः । यथा—

तन्वङ्गि ! भग्नः स स्नेहश्चिरं विरहशालिनोः ।
मृणालखण्डयोस्तन्तुरिव मार्द्दवभाक्तयोः ॥

यथा वा—

विनोर्मितापमकरस्नेहवारिविशोषणे ।
जनापवादः सुमहानभवत् कलशोद्भव ! ॥

इत्याद्युदाहरणात् । उत्पत्तावस्येतिश्लोके विशेषमनूद्य जीवितावधित्वं बोध्यते । जीवितावधित्वं जीवितनाशकत्वम् । प्रायश इति जीवितावधित्वेन सम्बध्यते ।

विरहानलपातपाण्डुरच्छविदम्भेन विशुद्धिभागपि ॥
तदपि प्रतिसद्य जीवतीत्ययमङ्को यमहेलयाहितः ॥

इत्युदाहृतेः । पक्षान्तरमाह—वेति । अत्र व्यवहृतिमनूद्य मरणावधित्वविशिष्टवैमुख्यं बोध्यते । वैमुख्यं द्वेधा—सर्वदा प्रेमविषयाकारमानसतया सर्वथा व्यवहारेष्वननुसन्धानमीषदनुसन्धानं च ।

आद्यं यथा—

प्रायः कृष्णशरीरी भवति भवेऽस्मिन्भवान्तरप्रकृतिः ।
अमरीभूय चिरं यत्पश्यति गोपी तदध्वानम् ॥

एषा च गोकुलादागतस्योद्धवस्योक्तिः ।

यथावा—

न सा वेत्ति सखीः शश्वत्स्वदेहावनकारिणीः ।
हन्तोद्धव ! कथं वेत्तु त्वदागममनन्यधीः ।

अत्र श्रीकृष्णविश्लेषविकलवल्लवीपरिचारिकाया उक्तिः ।

वैमुख्यहेतुमाह—

विश्लेषेण हृदि प्रेमविषयाकारसन्ततेः ।
सततं जनने यत्नो जन्यते तेन तद्भवेत् ॥ ७२ ॥

विश्लेषेणेति । सन्ततमिति सन्तत्या सम्बध्यते । तेन=हेतुना तत्=वैमुख्यम् ।

ननु प्रेमविषयमिलनोत्तरं व्यवहृतिवैमुख्येऽस्य का गतिस्तत्राह—

पुनर्योगेऽपि नापैति तद्योगं च न वेत्त्यसौ ।

पुनरिति । पुनः=विश्लेषापगमोत्तरमपि । योगेऽपि=प्रेमविषयमि-

लनेऽपि । तत्=वैमुख्यम् । नापैति=न गच्छति । चिरविश्लेषेण हृदि प्रेमविषयाकारसन्ततिजननसामर्थ्यातिशयाधानद्वारा बाह्यविषयकपरिचयवासनायास्तिरोधानात् । बाह्यविषयकपरिचयवासनातिरोधानं कैमुतिकन्यायेन विशदयति—योगं चेति । असौ=प्रेमाधारः । तथाच प्रेमविषयकपदार्थयोगोऽपि यदा न ज्ञायते तदा किमु वाच्यं प्रेमागोचरपदार्थपरिचय इति भावः । द्वितीयवैमुख्यं यथा—

नाश्नाति नापि पाथः पिबति न शेते च भानुवंशमणिः ।
विधिविहितः परमेतज्जीवनबीजं हि जानकीविरहः ॥

अत्र नञामलपार्थकत्वम् । अन्यथा जीवनासम्भवात् ।

यथा वा—

अपि त्वदीयविरहे पूर्ववद्वेत्ति साखिलम् ।
तथापि तद्धरे ! तस्या न प्रमा नापि वा भ्रमः ॥

अपरं वा—

भिषग्भिरासैरचिकित्स्यतां गता तनुः प्रियायायास्तव राधिकायाः ।
सखीजनश्राविततावकीननामाक्षरैरौष्ण्यमुपैति सद्यः ॥

प्रेमविषयः प्रेमाधारविषयकप्रेमाश्रय इति न नियम इत्याह—

यः प्रेमविषयो लोके स प्रेमाधारतां व्रजेत् ।
इति नैवास्ति नियमो विपरीतविलोकनात् ॥ ७३ ॥

य इति ।

विपरीतविलोकनं यथा—

अनन्यहृत्सदश्वेन तेन प्रेममहारथे ।
अपि स्खलन्प्रतिपदं केवलं गौर्नियोजितः ॥

अनन्यहृत्सदश्वेन=स्वहृदयाद्द्वितीयहृदयलक्षणसदश्वान्तररहितेन । एवंच प्रेमविरहिणि केवलं परिचयमात्रशालिनि प्रेमविषयत्वदर्शनमेव विपरीतविलोकनमिति भावः । विपरीतविलोकनान्तरं यथा—

सायुः कायः क्षीणो बिभ्रत्तापं सशर्म हृदयं च ।
तदपि प्रेम्णो विषयस्तस्मिन्प्रतिकूलमाचरति ॥

अत्र प्रेमविपरीतवैरस्य विलोकनं नियम इति । अनियमस्त्वस्त्येव ।

तृषितां हरिणीं हरिणस्तृषितं हरिणं विजानती हरिणी ॥
मितमम्बु पल्वलस्थं कपटं पिबतः परस्परालोकम् ॥

इत्यादिप्राचीनोदाहरणात् ।

प्रसङ्गादन्यदाह—

चलितादिप्रेमभूमिमारूढौ दैवतो यदि ।
परस्परस्य जानीतः सुखदुःखे परस्परम् ॥ ७४ ॥

चलितेति । इदं चलितदलितादिक्रमोत्पन्नायां चलितादिप्रेमभूमौ न तु दलिताद्यघटितक्रमोत्पन्नायां ज्ञातव्यमिति तन्त्रामृतकारः ।

नन्वेतत्कुतस्तत्राह—

तत्तदाकारसम्पत्तिः कारणं चलितोदिता ।

तत्तदेति । कारणं=परस्परगतसुखदुःखादिज्ञाने । चलितोदिता=चलितादुदिता । चलितदशायां भावनातिशयजनितप्रेमविषयाकारसम्पत्तिः प्रेमविषयगतसुखादिज्ञाने हेतुरिति फलितोऽर्थः ।

इदानीमुपसंहरति—

अलमन्यविचारेण प्रमेच्छेति स्थितं मतम् ॥ ७५ ॥

इति श्रीमत्त्रिपुरहरपुरवासिनानाशास्त्रविचारचारुचातुरीचमत्कारापारपारावारपारीणधुरीणजोजारकुलतिलकश्रीविश्वनाथपण्डितविरचिते प्रेमरसायने लक्षणखण्डः प्रथमः समाप्तः ।

---

श्रीजुष्टपदपद्मोऽपि गोपीसद्मावलम्बते ।
यतस्ततः प्रेमभेदः सोपपत्ति निरूप्यते ॥

इदानीं प्रेमभेदानाह—

उप्तं यत्तं कलितं दलितं मिलितं तथा कलितम् ।
छलितं चलितं क्रान्तं विहृतं गलितं च सन्तृप्तम् ॥ १ ॥

एतद्द्वादशभेदं प्रेम निरुक्तं सपल्लवं कविभिः ।
अहमपि पूर्ववचोभिर्व्याख्यां कर्तुं प्रवृत्तोऽस्मि ॥ २ ॥

इदानीमुप्तलक्षणमाह—

दर्शनोत्सुकता चित्ते जन्यते श्रवणादिना ।
या सोप्तं प्रेम यद्द्रुत्या स्यान्ममेति विजृम्भणम् ॥ ३ ॥

दर्शनेति । श्रवणादिनेत्यत्रादिनाऽश्रुतविषयकप्रथमदृष्टिपरिग्रहः। तथाच क्वचित् द्वितीयदर्शनविषयकोत्सुकतैव प्रेमबीजमिति फलितम् । दर्शनोत्सुकतामात्रं लक्षणम् । तेन नानुगमः । दर्शनोत्सुकतायाः प्रेमबीजत्वं निरूपयितुमाह-यद्द्रुत्येति । दर्शनोत्सुकताकृतद्रुत्येत्यर्थः । तथाच दर्शनोत्सुकता प्रेमबीजं तया चित्तद्रुतिः द्रुतस्य चित्तस्य मम स्यादित्याकारो यः परिणामः स उप्तं प्रेमेति सिद्धम् । एवं च दर्शनोत्सुकतायां प्रेमसाधनत्वात्प्रेमत्वव्यपदेशः । हन्तैवं द्रवजन्यस्य प्रेम्णः प्रागुक्तंद्रवजनकत्वं विरुद्ध्येत । प्रेम्णोऽपि तापकतया प्रेमान्तरहेतुद्रवजनकतायामविरोधात् । अथानवरतं प्रेमधारैव स्यात् । स्यादेव । यदि प्रबलतरप्रारब्धकृतः शरीरयात्रानिर्वाहको विषयान्तरोपमर्दो नापतेत् । अत एव भगवत्प्रेमधारापरिपन्थिनं विषयान्तरसञ्चारं वारयितुमेव योगवैराग्यसाधुसङ्गतयः सद्भिराद्रियन्त इति दिक्

दर्शनोत्सुकतां दर्शयति—

कियान्परिश्रमस्तस्य बतायं वनमालिनः ।
श्रुतिदेशात्किमत्यन्तं दूरे मल्लोचनावनिः ॥ ४ ॥

कियानिति । स्वात्मानं प्रतीयमुक्तिः । अत्र दर्शनोत्कण्ठा व्यङ्ग्या ।

उप्तप्रेमदशामाह—

तदानीं श्रवणे तैक्ष्ण्यं लोचने मन्दगामिता ।
सर्वासहनमित्येवमुप्तप्रेमदशां जगुः ॥ ५ ॥

तदानीमिति । मन्दगामिता दृष्टेषु ।

इदानीं कृष्णकल्पद्रुमोक्तं यत्तं लक्षयति—

तदेव कपटप्रश्नाद्यैर्व्यक्तं यत्तमितीर्यते ।
कन्दलेनातिसूक्ष्मेण व्युप्तं बीजमिवोल्लसत् ॥ ६ ॥

तदेवेति । तदेव=उप्तमेव । व्यक्तं=सख्यादिजनस्य कथंचिदितिशेषः । अत्र दृष्टान्तः । अतिसूक्ष्मेण कन्दलेनोल्लसत् उप्तं बीजमिवेति । अत्र

कन्दलप्रतिमः कपटप्रश्न एव। तथाच दर्शनोत्सुकता यदा कथं चिद्व्यक्तीभवति तदा सैव यत्तं प्रेमेति फलितम्। अत्र किञ्चिदुत्सव्यक्तीकरणपटुकपटप्रश्नोत्तरप्रत्युत्तरसञ्जातहर्षविद्रुतहृदयेष्टाकारः स यत्तं प्रेमेति निष्कर्षः। एतेन प्रेमाधारकर्तृककपटप्रश्नस्य प्रेमाधारे तापकत्वाभावाद्यत्तं कथं प्रेमेति शङ्का परास्ता। यत्र तु कपटप्रश्नानन्तरमुत्तरं नास्ति तत्रोत्सेव व्यक्तावस्थापन्नमिति मन्तव्यम्। तन्त्रामृतव्याख्यायाममृतसञ्जीविन्यामन्यथापि यत्तं भवतीत्युक्तम। तेन कपटप्रश्न उपलक्षणम्।

आख्याति दिक्षु हरितं हि तृणं मृगेषु
भूभृद्व्रवेषु हरितालमसौ मृगाक्षी॥
देवद्रुमेषु हरिचन्दनमेव शश्व—
त्प्रायो मया विदितमालि! मनः सुदत्याः॥
इत्याद्यनेकधोदाहृतं च।

एतदवस्थामाह—

छलस्य पाण्डुलेखोऽत्र चरित्रफलकाश्रितः॥ ७॥

अत्र=यत्तावस्थायाम्। चरित्रेति। प्रेमाधारगतचरितरूपफलकेपास्यां छलस्य पाण्डुलेखशब्दगम्यः प्रथमारम्भ इत्यर्थः। यत्तावस्थायाः पूर्वमीदृशाच्छलानाचरणात्। यत्तं यथा—

प्रातरवाद्य कस्येयं वार्त्ताताभिरुदीर्यते।
इत्थमालि! कथं ब्रूषे नन्दसूनुः सुदर्शनः॥

कृष्णवार्त्तेयमिति जानन्त्या एव तन्नामश्रवणोत्कण्ठया कस्याश्चिदिह कपटेन प्रश्नः। कपटप्रश्नेनेव दर्शनोत्कण्ठातिरेकसमुदायिना कपटवचसापि उत्सव्यक्तीकरणे यत्तपाक उन्नेयः। 'वदालि! वनमालिन' इति पाठकल्पनया पूर्वश्लोक एवात्रोदाहृतिः। तन्त्रामृतकारास्तु वचनविद्रुतचित्तेष्टाकार एव यत्तम्। वचनमुप्तपिशुनप्रशंसासूचकः प्रश्नः, न निर्बन्धः। अतश्च—

तीर्त्वा चिरादिमान् क्लेशान् श्रीरामं त्वमवाप्स्यसि।
इति त्रिजटयोक्ता सा जाताऽनिमिषलोचना॥

इत्यादावुत्सस्य हंसादिवचनद्रुतचित्ते नलाद्याकारस्य च यत्तस्य नासङ्गहः।

यत्तमिष्टाकृति प्रोक्तं वचसा विद्रुते हृदि।

इति यत्तलक्षणमप्याहुः। हरिदासस्तु क्रिययाऽप्यव्यक्तीकरणं यत्पाकः। यथा—

धत्ते स्वकर्णे ताटङ्कमन्या पत्युश्चिरायुषे।
चित्रं शैलसुता कर्णे पत्युरेवार्द्धदेहभाक्॥ इत्याह।

ललितं निरूपयति—

हस्तगच्छलजालोकजलसिक्तं तदुच्यते।
ललितं पाण्डुलेखोऽत्र धाष्टर्यस्य मुहुरीक्षणे॥८॥

हस्तेति। हस्तगमर्थात्सुशिक्षितं यच्छलं तस्माज्जातो य आलोकोऽवलोकनम् अर्थात्प्रेमविषयस्य तदेव जलं तेन सिक्तं यत्तमेव ललितमुच्यत इत्यर्थः। ललितावस्थामाह-पाण्डुलेख इति। अत्र=ललिते। धाष्टर्यस्य पाण्डुलेखः प्रथमारम्भः।

द्वितीयावस्थामाह—

कण्डूतिर्जायते नेत्रे दृष्टसम्बाधसम्भवा।
प्रथमः कन्दल इव ह्यङ्कुरं ललिताभिधम्॥ ९॥

कण्डूतिरिति। दृष्टेति। दृष्टस्य=अर्थात्प्रेमविषयस्य सम्बाधः=संमर्दः। प्रथम इति। तथाच ललितेऽनवरतालोकनहेतु धाष्टर्यं कण्डूतिश्चेत्यङ्कुरद्वयं जायत इत्यर्थः। दृष्टान्तमाह—कन्दल इवेति। कन्दलोऽत्र बीजाज्जातः प्रथमः काण्डविशेषः। स यथा ह्यङ्कुरो भवति तथा ललितमित्यर्थः।

ललितं यथा—

अलसैर्मसृणैर्लोलैः कुञ्चिताग्रैः पराङ्मुखैः।
सम्मुखैर्मृगशावाक्ष्या वीक्षणैर्लक्षितो युवा॥

धाष्टर्यं यथा—

यातृननान्दृश्वश्रूदेवरपिशुनाग्निपञ्चकुण्डेषु।
भीत्याहुतिफलरूपस्तस्यास्तन्व्यास्त्वदालोकः॥

ललितस्य द्वितीयावस्था यथा—

लावण्यदिग्धं किमपि प्रिये! लोचनयोर्गतम्।
अतस्ते युक्तमेवैतत्कण्डूतिर्यदिहाश्नुते॥

ललितस्य भेदान्तरमाह—

अव्यक्तमेतल्ललितमङ्कुरद्वयमात्रभृत्।

अव्यक्तमिति । अव्यक्तत्वे हेतुः अङ्कुरद्वयमात्रभूदिति ।

व्यक्तं ललितं निरूपयति—

स्वेदादयः पञ्च तत्र सञ्जाता धार्ष्ट्यपल्लवाः ।
यदा तदा तल्ललितं व्यक्तमित्यभिधीयते ॥ १० ॥

स्वेदादय इति । पञ्चेति । स्वेदस्तम्भरोमाञ्चस्वरभङ्गवेपथुरूपा इत्यर्थः ।

इदानीं कण्डूतिपल्लवानाह—

वैवर्ण्यं प्रलयारुण्याश्रूणि कण्डूतिपल्लवाः ।

वैवर्ण्यमिति । एतच्च तन्त्रामृतकाररीत्योक्तम् । वैवर्ण्यप्रलयौ धार्ष्ट्यकण्डूत्योर्नतु कण्डूतेरेव पल्लवाविति हरिदासादयः ।

एतेऽपि चाणवः स्थूलास्तत्राद्या ललिते स्थिताः ॥ ११ ॥

ललिते=यत्तावस्थास्मृतिसचिवे । तेन प्रत्यक्षदृष्टे प्रेमविषये कथं वैवर्ण्यादिपल्लवानामुदय इति शङ्का परास्ता । स्थूलास्तु दलिते । "कण्डूतिपल्लवाः स्थूला" इत्यादिनाऽग्रे दलिते वक्ष्यमाणत्वात् ।

व्यक्तं ललितं यथा—

स्खलति वचनं स्वेदस्तोमस्तनौ तव वेपथुः
पुलकितमथ श्वासव्रातं मुहुर्मुहुरुज्झसि ॥
रहसि कथय क्रीडाकुञ्जे नितान्तमनोहरे
नयनविषयं यातः प्रायः प्रियो मधुसूदनः ॥

मिलनानुदयादेतद्दलितादतिदुःखदम् ।

मिलनेति । मिलनानुदयात्=प्रेमविषयस्य दूरतो दर्शनेऽपि हाससम्भाषणादिपर्यवसायिस्वारसिकतन्मिलनाभावात् । एतत्=ललितम् । दलितात् वक्ष्यमाणात् । एतद्विवृतमभियुक्तैः । यथा—

अनयनपथे प्रिये न व्यथा भवति दृश्य एव दुष्प्रापे ।
म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥ इति ।

व्यक्तललितावस्थानामानन्त्यमिति दर्शयति—

ललितं दृष्टिभेदानामाकरत्वेन कथ्यते ।

ललितमिति । दृष्टिभेदानां=शृङ्गारादिदृष्टीनाम् ।
दृष्टिरित्युपलक्षणमित्यभिप्राय इत्याह—

यथावैदग्ध्यमेतस्य दशा सञ्जायते नृणाम् ॥ १२ ॥

यथेति । यथावैदग्ध्यमित्यतः पूर्वं नृणामिति सम्बन्धः । प्रेमाधाराणां वैदग्ध्यतारतम्येन ललितदशातारतम्यमित्यर्थः ।

ललितलक्षणं निकृष्टं कथयति—

विचित्रदृष्टिभिः प्रेम यत्तमेवातिविस्तृततम् ।
ललिताख्यं विजानीयादिति तत्त्वं समासतः ॥ १३ ॥

विचित्रेति । यत्तं प्रेमैव विचित्रदृष्टिभिरतिविस्तृतमिति सम्बन्धः। यद्यपि विस्तृतमित्येव वक्तुमुचितम्, तथापि ललितमनन्तप्रभेदमिति ज्ञापनाय तथोक्तम् । यत्तावस्थापन्नचित्ते दृष्टितापकद्रुते य ईक्षारूपः परिणामस्तल्ललितमिति परमार्थः ।

तन्त्रान्तरोक्तमेषामुत्तमयत्तललितानामुत्तरभूमिकात्वं विशदयति-

उत्तमं प्रेम विजानीयात्तूणीरावस्थितः शरः ।
स एव गुणसंसर्गात् यत्तमित्यभिधीयते ॥ १४ ॥
लक्ष्यसंस्पर्शसंरुद्धगतिं तु ललितं विदुः ।

उत्तमिति । लक्ष्येत्यनेन भित्त्वा लक्ष्यं विनिर्गताच्छरान्तराद्वैलक्षण्यमभिहितम् ।

दलितं लक्षयति—

केनापि हेतुना दृष्टिविच्छेदे दलितं मतम् ।

न विदेशगमनमात्रं दृष्टिविच्छेदे हेतुः । किन्त्वनवसरादिकमपीति बोधयितुं केनापीति शब्देन निर्दिष्टम् ।

निमेषदृष्टिविच्छेदे ललितं दलितात्मकम् ॥ १५ ॥

निमेषेति । तथाच ललितलक्षणमेकमेव प्रेम निमेषप्रयुक्तदृष्टिविच्छेदे ललितदलितोभयात्मकमिति तन्त्रामृतकारः । हरिदासस्तु ललिताकारान्तःकरणैकदेशस्यैव निमेषप्रयुक्तदृष्टिविच्छेदद्रुतत्वोपगमे (दलितम् ।) युज्यते चेदं नान्यदित्याह । गुणाकरस्तु निमेषप्रयुक्तदृष्टिविच्छेदातिरिक्तदृष्टिविच्छेदकालिकं प्रेमविषयस्मरणमेव दलितं तापकम् । एवं च निमेषप्रयुक्तदृष्टिविच्छेदे दलितमित्युच्यमानं प्रेम दलिताभास एव । उत्तमावपि कविभिर्वर्ण्यमानं दलितमपि तथा न तु मुख्यम् । एवं मिथ्यादर्शनजनितं ललितं ललिताभास एवेत्यादिकं बोध्यमित्याह ।

स्वेदादिपञ्चकं दग्धं दृष्टिविच्छेदवन्हिना ।
कण्डूतिपल्लवाः स्थूला जातास्तेनैव हेतुना ॥ १६ ॥

स्वेदादीति । तेनैव=दृष्टिविच्छेदवन्हिनैव ।

वन्हिना विपिने दग्धे जायन्ते नवपल्लवाः ।
यथैव धाष्टर्यकण्डूत्योस्तथैवेति बुधा जगुः ॥ १७ ॥
कण्डूतिपल्लवाः पूर्वं न व्यक्ता ललिते स्थिताः ।
स्वेदादयस्तु धाष्टर्यस्य न कण्डूतेरिति स्थितम् ॥१८॥
वैवर्ण्यादौ तु कण्डूतेरिव धाष्टर्यं प्रयोजकम् ।
ललितात्तेन दलिते विशेषोऽस्ति महानसौ ॥१९॥

वन्हिनेति । यथैवेति पूर्वेणान्वितम् । तथैवेति । वैवर्ण्यादयो नवपल्लवा जायन्त इत्यर्थः । कण्डूतिपल्लवानामणूनां ललितेऽप्युदयोऽस्ति न तु सर्वथाऽभाव इत्यत उक्तं व्यक्ता इति । अयं भावः । ललिते धाष्टर्यं कण्डूतिरिति शाखाद्वयं यत्तावस्थोदितकपटप्रश्नरूपकाण्डाश्रितमुदितम् । तत्र धाष्टर्यशाखायां स्वेदादिलक्षणाः पञ्च पल्लवा जाताः । कण्डूतिशाखायां वैवर्ण्यादयः पल्लवा अणवोऽपि सर्वथैव जायन्त इति नैव वक्तुं शक्यम् । यदि जायन्त एवेति नियमस्तथाप्यणुत्वादजातप्राया एवेति न कण्डूतिपल्लवानां धाष्टर्यपल्लवतुल्यता । दलिते तु कण्डूतिनिदानका अपि वैवर्ण्यादिपल्लवा अनवरतविलोकनोपयोगिधाष्टर्यप्रयोज्या अपि भवन्तीति कण्डूतेरिव धाष्टर्यस्यापीति शक्यं वक्तुम् । अतो दलिते शाखाद्वयमपि पल्लवितम् । नहि स्वेदादयः कण्डूतिपल्लवा इति सम्भवति । येन कण्डूतिशाखापि ललिते पल्लविनी स्यादिति दलितललितयोर्महान्भेदः ।

तुष्यतु दुर्जन इति न्यायेनाह—

स्वेदादयोऽपि कण्डूतिप्रयोज्या इति मन्यते ।
तर्हि तैरेव कण्डूतिशाखा पल्लविनी न किम् ॥२०॥

स्वेदादयोऽपीति । नहीति । नह्येतावतापि ललिते क्षतिरस्तीति भावः ।

प्रसङ्गादाह—

प्रायेण दलिते चेतो द्रवतीति यतो मतम् ॥
अतो हि भावनाश्रेणी याति प्रेमसमाधिताम् ॥२१॥

प्रायेणेति । प्रायेण=बाहुल्येन । भावनेति प्रेमविषयभावनेत्यर्थः ।

इदमुदाहरति—

निसर्गरूक्षात् श्रीकृष्णात् च्युतं तन्व्या निजं मनः ॥
(१)कृष्णाभूमौ द्रुतं यत्तदचिरादालि ! मज्जति ॥२२॥

निसर्गेति ।

ननूमादावपि भावनाश्रेणी सम्भवतीति कथमत्रैव प्रेमसमाधिरुच्यते तत्राह—

उन्मे तु भावनैवास्ति यत्ते तच्छ्रेण्यपि स्फुटम् ॥
तथापि सा व्यवहिता जायते प्रत्ययान्तरैः ॥२३॥

उन्मेति । उन्मे विशकलिता भावनैव । एवकारेण न तच्छ्रेणी । यत्ते यद्यपि तच्छ्रेण्यस्ति तथापि विजातीयप्रत्ययव्यवधानशून्या नेति न प्रेमसमाधिशब्दभागित्यर्थः । एवं च प्रेमविषयभावनाश्रेणी तादृशी प्रेमसमाधिशब्दवाच्येति फलितम् ।

समाधिमुदाहरति—

त्वद्ध्यानविस्मृताशेषानागसां सा निकेतनम् ॥
त्वं तु नाथतया तादृगहमेव स्वकर्मणा ॥२४॥

त्वद्ध्यानेति ।

ननु लोके मोहो व्याकुलता चेक्ष्यते न तु प्रेमविषयाकारः प्रेमसमाधिस्तत्राह—

हार्दसौहार्दयोर्ज्ञेये मोहव्याकुलते क्रमात् ॥
ते च प्रेमसमाधिश्च प्रेम्णीति प्रेमभृद्वचः ॥२५॥

हार्देति । ते=मोहव्याकुलते ।

उक्तत्रयमेकत्रोदाहरति—

अनवाप्य हरिं कुञ्जे मुक्ताः श्वासा यया चिरम् ॥
विलोक्य लोचने पश्चाद्योगिनीव न्यमीलयत् ॥२६॥

(१) कृष्णा=कालिन्दी ।

अनवाप्त्येति।

दलितावस्थामाह।

अत्र लोचनयोस्तैक्ष्ण्यं श्रवणे मन्दगामिता ॥
भ्रान्तिर्विनिद्रतोत्त्याऽऽदिदशा ज्ञेया विचक्षणैः ॥२७॥

अत्रेति। तैक्ष्ण्यमितरेन्द्रियापेक्षया स्वविषये शीघ्रं प्रवृत्तिः। मन्दगामितेति प्रेमविषयातिरिक्त इत्यर्थः। ननु लोचनयोरप्युक्तविषये मन्दगामिता तुल्यैव तत्कथं श्रवण इति ग्रहणं तत्राह—भ्रान्तिरिति। तथाच दृष्टमात्रे वस्तुनि प्रेमविषयस्य भ्रमोत्पत्त्या न प्रेमविषयातिरिक्ते विषये लोचनयोर्मन्दप्रवृत्तिर्वक्तुं शक्या। ननु वचनमात्रेऽपि प्रेमविषयोदन्तत्वभ्रमोदयेन श्रवणयोरपि न प्रेमविषयोदन्तातिरिक्ते वचने मन्दप्रवृत्तिः सम्भवतीति चेत्, सत्यमेतत्। उक्तेऽपि श्रवणतैक्ष्ण्यस्य सत्त्वात् यत्तवदिहाप्यास्तां को दोष इति चेत्, अस्तु। नहि वयं दलिते सर्वथैव तन्नास्तीति ब्रूमः। किन्तु लोचनतैक्ष्ण्यापेक्षया श्रवणतैक्ष्ण्यस्य न्यूनतामेव। दर्शनमात्रोत्तरभाविनि श्लेषे दर्शनोत्कण्ठाया इव श्रवणोत्कण्ठायास्तथाऽभावात्। एवंच दर्शनोत्कण्ठायाः प्राधान्यात्प्राधान्येन व्यपदेशा भवन्तीति न्यायेनात्र लोचनयोस्तैक्ष्ण्यमभिहितमिति मन्तव्यम्।

दृष्टविषये प्रेमविषयतादात्म्यस्य भ्रान्तिमुदाहरति—

विशेषदर्शनासह्यत्वदीयविरहव्यथा ॥
अनुरागमहादोषकोपेऽपि प्राणिति प्रिया ॥ २८ ॥

विशेषेति। अत्र काचिद्वाकुलसदनशिखरमारूढा दूरतरवर्त्तितमालतरुषु श्रीकृष्णभ्रममावहन्ती पुनः सञ्जातविशेषदर्शनासह्यविरहव्यथानन्तरमुत्कटानुरागदोषसंलब्धतद्विभ्रमजीवातुरङ्गना भ्रान्तिस्थानोदाहरणम्।

विनिद्रता यथा—

विरहानलधूमीयश्रेणिः कोक! न यामिनी ॥
इमे कोकनदे मुद्रां नाश्नतः कथमन्यथा ॥ २९ ॥

विरहेति। कोकनदत्वेन लोचने अध्यवसिते। अत्रोपवनसरसीगतस्वनत्कोकसम्बोधिन्यां निजानिकटास्थितविप्रयुक्तनायिकासख्युक्तौ निद्राभावो व्यङ्ग्यः।

उक्तिर्यथा—

मनसो दैवतमिन्दुः श्रुतिरिति सत्या निकामकाठिन्यात् ॥
विरहहुताशनिमग्नं भस्म न मेऽद्यापि तद्भवति ॥ ३० ॥

मनस इति। अत्रादिना स्मृत्यविश्वासाश्रुपातादि।

तत्र स्मृतिर्यथा—

तासां विलोचनजलानि मदाश्रयाणां
मद्वाचिकेन ललितेन हरोद्धवेति।
उक्त्वा हरिर्व्यसनवारिधिवाडवोऽपि
पीनाश्रुपूर्णनयनः स्वयमप्युदीतः॥ ३१॥

तासामिति। अत्र गोपीकृतानुनयस्मृतिर्व्यङ्ग्या।

अविश्वासं दर्शयति—

आयातीति मदुक्त्या प्रत्येतु कथं तवानवद्याङ्गी।
शपथशतैरपि नान्धः स्पर्शादन्यत्र विश्वसिति ॥ ३२ ॥

आयातीति—

अश्रुपातो यथा—

चित्तमुच्छलितं तेऽनु दुःखाब्धेर्यद्बहिः पयः॥
गुरुर्भामकराकृष्टं तत्तस्यास्तत्र मज्जति ॥ ३३ ॥

चित्तमिति। अत्राश्रुपातमोहौ व्यधिकरणावुक्तौ।

इदानीं मिलितप्रेम लक्षयति—

विश्लिष्टस्य लाभेन द्रुते चित्ते पुनर्भवेत् ॥
य आकारस्तन्मिलितं ललितप्रेमसन्निभम् ॥ ३४ ॥

विश्लिष्टेति। लाभेन=स्वच्छन्दवीक्षणरूपेण। न तु ललित इव व्याजावलोकनेन। दलिते व्याजावलोकने दैवात् सम्पन्ने तु ललितमेव प्रेम। चित्ते=दलितात्मना स्थिते। ललितप्रेमेति। "ललितं दृष्टिभेदानाम्" इत्यादिनाभिहिताभिर्ललितलीलाभिर्युक्तमित्यर्थः।

ननु तर्हि ललितादस्य को भेदस्तत्राह—

स्वस्वशाखोचितास्ते ते पल्लवा व्यक्ततां गताः॥
एतस्य दलितप्रेमपरिणामस्वरूपतः ॥ ३५ ॥

स्वस्वेति । स्वस्वशाखोचिताः=धार्ष्ट्यशाखोचिताः कण्डूतिशाखोचिताश्चेत्यर्थः । व्यक्ततामिति । ललिते कण्डूतिशाखोचिताः पल्लवा न व्यक्ता इह तु व्यक्ता इति । कुतो हेतोः । तत्राह—एतस्येति । मिलितस्येत्यर्थः । तथाच कण्डूतिपल्लवानां दलिते व्यक्ततया तत्कार्यरूपे मिलिते तद्व्यक्तत्वे किं चित्रमिति भावः ।

ननु दलितस्य स्वेदादिपल्लवविरोधितया तत्कार्ये मिलिते कथं तेषामुदयस्तत्राह—

अव्यक्तं दलितं कार्ये प्रस्फुटास्तेन पल्लवाः ॥
वैवर्ण्यप्रलयौ स्वल्पकालगौ नियतौ च न ॥ ३६ ॥

अव्यक्तमिति । स्वेदादिवन्न चिरस्थायिनौ वैवर्ण्यप्रलयौ । तावपि नियमेन सर्वत्रोत्पद्येते इत्यपि न । दर्शनजन्यानन्दस्य तद्विरोधित्वात् । कार्ये कारणस्य तिरोधानाभ्युपगमेन न कार्यस्य कारणप्रतिद्वन्द्विता ।

कार्ये कारणतिरोधानं विशदयति—

मृत्तिकोत्थघटे पुंसो न तद्व्यवहृतिः क्वचित् ।
विलीने तु घटे तस्य व्यवहारो न दृश्यते ॥ ३७ ॥
कार्ये तिरोहितो हेतुर्हेतौ कार्यं तिरोहितम् ॥ इति ।

मृत्तिकोत्थेति ।

दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव ।
जगति तथा परमात्मा परमात्मनि तत्तिरोभवति ॥

इत्यभियुक्तोक्तेः ।

उपसंहरति—

अतोऽसौ विस्तृतः प्रोमा धाष्टर्यकण्डूतिपल्लवैः ॥ ३८ ॥

अत इति । असौ=मिलितः ।

मिलितो यथा—

चिरदृष्टमायताक्षी पश्यति कामं यथा यथा कृष्णम् ।
सात्त्विकभावविलासान् गृह्णात्यखिलांस्तथा गोपी ॥

यथा वा—

संवीक्ष्य तं हरिमपाङ्गबलेन बाला
तद्वीक्षणाकुलतया सहसा पपात ॥
दुर्दैववातविगतिः कुसुमायुधस्य
बाणः किमेणदृशमेव समाससाद ॥

अपाङ्गबलेन=नायकोद्दीपनसमीहया जनितेन न तु गुरुगौरवेण। अत्र विशेषो गुणाकरेणोक्तः—

मिलिते सख्युपालम्भोऽप्यव्यक्तः कान्तगोचरः। इति।

सख्युपालम्भः=सखीमात्रकृत एवोपालम्भः, सोऽप्यन्यापदेशादिनेति।

उदाहरणं यथा—

दशैषा स्नेहभृद्दीप! भवता परितापिता।
जातप्रकाशा सर्वत्र केवलं तेऽन्तिके तमः॥ इति।

उपालम्भाभिलाषाणां दधतां कुसुमात्मताम्॥
मिलितेऽस्मिन्समुदितः पाण्डुलेखः प्रतिक्षणम्॥ ३९॥

उपालम्भेति।

उपालम्भाभिलाषाणां=प्रेमविषयोपालम्भविषयकाभिलाषाणाम्। उपालम्भानां तु वाग्रूपत्वेन कलितान्तर्भावात्तदभिलाषपर्यन्तानुधावनम्। न चैवं पल्लवेषु स्वरभङ्गस्य गणना न युक्तेति वाच्यम्। मिलितदशायां प्रेमविषयातिरिक्त एव तदुदाहरणात्। एतच्चानुपदमेव व्यक्तीकरिष्यामः।

उपालम्भाभिलाषाणामित्यत्रोपालम्भपदं रतादीनामुपलक्षणमित्युदाहरणव्याजेन दर्शयति—

रतानुनयवाक्करग्रहणपादपङ्केरुह-
प्रणामपरिरम्भणप्रमुखकामनासञ्चयात्॥
विलोचनपथागतं वहिरतीव राधामनो
मनोजजयशालिनीं यदुपतेस्तनुं चुम्बति॥ ४०॥

रतेति।

कलितं प्रेम निरूपयति—

उपभोगात् द्रुतं चित्तं वर्ण्यते कलितात्मकम्॥

उपभोगादिति। चित्तं=मिलितात्मना स्थितम्।

ननु शुकादिनिष्ठभगवद्विषयककलितेऽव्याप्तिः उपभोगद्रुतपरिणामत्वाभावात्। अत आह—

कर्मेन्द्रियाभिमुख्यं यदुपभोगः स उच्यते॥ ४१॥

कर्मेति। प्रेमाधारे कर्मेन्द्रियाणां वागादीनामाभिमुख्यं स्वव्या-

पारे फलोपधायकत्वं स इहोपभोगपदार्थो रतिसाधारणो विवक्षितः । कर्मेन्द्रियाणि च प्रेमविषयनिष्ठानि । तदाश्रितकर्मेन्द्रियाभिमुख्यस्यैव प्रेमाधारनिष्ठचित्तद्रवहेतुत्वात् ।

तद्यथा—

संवीक्षणेन सविधागमनेन वाचा-
मुच्चारणेन सुलभेतरयाचनेन ॥
चेलाञ्चलग्रहमुखैश्चरितैः स शौरिः
संसारसारसुखसीमनि तां युयोज ॥

हन्त कर्मेन्द्रियाभिमुख्यं यद्युपभोगस्तर्हि भोगपर्यवसायिहार्दत्वं प्रेमत्वमितिलक्षणे शुकादिगतभगवद्विषयकप्रेम्ण्यव्याप्तिकथनं प्रागुक्तमसङ्गतं स्यात्तत्राह—

ईदृग्भोगोऽपि चेत्प्रेमलक्षणे विनिवेश्यते ॥
तथापि वचनानर्हा भोगपर्यवसायिता ॥ ४२ ॥

ईदृगिति । भोगपर्यवसायिता तदवच्छेदकधर्मं विना ग्रहीतुमशक्या । स च धर्मो यदि गृहीतस्तदा स एव लक्षणमस्तु । यदि न गृहीतस्तदा लक्षणापहरणं दोषः । किञ्च भोगपर्यवसायितावच्छेदकधर्मोऽपि दुर्वचः । न भवदुक्तेच्छाविशेषत्वं तथा । हार्दादपि कदाचित् भोगोदयेन व्यभिचारात् । नच हार्दसाधारणेन येन केनापि धर्मेण हेतुता वाच्या । तथा सत्यस्य प्रेममात्रनिष्ठत्वाभावेन हार्देऽतिव्याप्तिप्रसङ्गात् । वस्तुतस्तु भोगपर्यवसायिहार्दमिति प्रेमलक्षणस्योक्ताव्याप्तिरेव दूषणं सारमिति बोध्यम् । ननु एवं सत्याधुनिकाः शुकदेव इव गलितभगवत्कलितप्रेमाणः स्युरिति चेत्, तेष्वपि कलिताभासाङ्गीकारेण क्षत्यभावात् । अत एव—

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः ॥
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण—
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥

इत्यनेन पद्येन श्रीजयदेवोऽप्युदाजहार । अस्य च कलितस्याभासरूपत्वमुदाहरणान्तरेण गुणाकरोऽपि स्पष्टमाचष्टे—

हृदयान्नापयातोऽसि दिक्षु सर्वासु दृश्यसे ।
वत्स ! राम ! गतोऽसीति सन्तापेनानुमीयसे ॥ इति ।

यथा वा--

त्वामायान्तमवेत्य हृष्यति पुनः कान्तान्तरालम्बिनं
प्रम्लायत्यथ पादपद्मपतितं रोमाञ्चमालम्बते ॥
इत्येवं निखिलं विभाव्य विरहं प्रावापि यद्राधिका
जीवित्वेन न हीयते बलवता लक्ष्मीश ! तज्ज्ञायताम् ॥

ननु कलितस्यावस्थाः कथयितुमशक्याः । नच कर्मेन्द्रियव्यापाररूपास्ता इति वाच्यम् । कर्मेन्द्रियव्यापाराणां कलितहेतुद्रवनिष्पादकतया कलितावस्थात्वानुपपत्तेरत आह—

कर्मेन्द्रियाणां व्यापाराः प्रेमाधारात्मवर्त्तिनाम् ॥
ज्ञातव्याः कलितावस्था नेयत्ताऽऽसां निरूपणे ॥४३ ॥

कर्मेति । प्रेमाधारगतकर्मेन्द्रियव्यापाराणां प्रेमाधारगतचित्तद्रवहेतुत्वाभावात्कलितावस्थात्वे न बाधकम् । नेयत्तेति । अनेकधा निरूपयितुं शक्या इति भावः । अत्र कर्मेन्द्रियव्यापारेषु कामिनीगताः कतिपयहावपदवाच्याः । परे तु परिरम्भणपरिहासप्रवृत्तिकथनादयः सर्वसाधारणाः । तत्र प्रवृत्तिकथनोदाहृतिः प्राचां यथा-

श्यामा वामा सरणिरसमा पन्नगाः पादघृष्टाः
कल्लोलिन्यः कुपथचरिता वारिदा वारिवाहाः ॥
यत्सम्पर्कादहमपि विसस्मार जानाति कोऽन्यः
कस्ते ब्रूयादहह मथुरानाथ ! मत्साहसानि ॥

यथा वा—

एते मे नयने तवास्यशशिनः कामं चकोरौ पुन-
र्भृङ्गावङ्घ्रिसरोजयोर्झषयुगं सौन्दर्यवारांनिधेः ॥
एकैकात्मतयापि यत्र विरहक्लेशो न वाग्गोचरः
सह्यः किं पुनरेतयोः स युगपन्नानात्मभिर्यः पतेत् ॥

अपरं च—

त्वदङ्घ्रिवीक्षणविधौ कतरो नान्तरायकृत् ॥
देव ! लोचनयोर्न्यस्तो निमेषोऽप्येष तादृशः ॥ इति ।

बाह्यावस्थाः प्रदर्श्यान्तरा दर्शयति—

विपदस्मणं दीर्घानेहासि स्वल्पतामतिः ॥
कृतार्थतायाः कलना दशा कापि विजृम्भते ॥ ४४ ॥

विपदिति ।

क्रमेणोदाहरणानि—

सानुजस्य सकान्तस्य सुतस्यागमनेन सा ॥
तूर्णीचकार वैधव्यदशाक्लेशमहीधरम् ॥
लक्ष्मणास्यसरोजोत्थरामोदन्तरसग्रहैः ॥
सुमित्रा विगतां रात्रिं नाज्ञासीद्भ्रमरीव सा ॥
सुतसंवीक्षणालापलालनानुगमादिभिः ॥
मेने नन्दप्रियात्मानं ललनाशिरसां मणिम् ॥
एत एव फलायन्ते कलितप्रेमपादपे ।

एत इति । एते=कर्मेन्द्रियव्यापाराद्याः ।

प्रसङ्गादाह—

आनन्त्यात् द्रवहेतूनां विषये दृष्टिगोचरे ॥
अपि प्रेमसमाधिः स्यादानन्दभरवैभवात् ॥ ४५ ॥

आनन्त्यादिति । द्रवहेतूनाम्=कर्मेन्द्रियव्यापाराणाम् । अपिरत्राश्चर्यं द्योतयति । विश्लिष्टविषये तद्विश्लेषासादितवैरस्येषु विषयान्तरेषु प्रसाराभावादैकाग्ग्यशालिनश्चित्तस्य प्रेमसमाधौ नाश्चर्यम् । तर्हि कथमसौ समाधिस्तत्राह—आनन्देति । तथाच फलानुरोधित्वात्कल्पनायाः क्वचिद्विश्लेषः क्वचिदानन्दभरः प्रेमसमाधौ हेतुरिति भावः ।

असौ प्रेमसमाधिः कस्येत्याशङ्कामुदाहरणेनापाकरोति—

तदालापोदितानन्दैरनुक्षणभृतेन्दिरा ॥
अपि दृष्टिपथे विष्णौ निमिमील विलोचने ॥ ४६ ॥

तदेति ।

समाधिमवलम्बते—

कस्मिन्समाधौ गोपीनां स्थितिः साहजिकेति चेत् ॥
एतेन नियमेनालं नैतासामेकरूपता ॥ ४७ ॥

कस्मिन्निति । दलितसमाधिः कलितसमाधिश्चेति द्विविधः प्रेमसमाधिः । तत्र कस्मात्समाधेर्लग्नाद्गोपीनां न व्युत्थानमिति मा शङ्किष्ठाः । कासांचिल्ललितचेतसां दलितेन कासांचित् मिलिताकालितहृदां कलितेन सामधेः सम्भवान्नैकसमाधौ नियमः । न ह्येकचित्ता गोप्य इत्याह—नैतासामिति ।

शङ्कते—

विश्लेषानन्दतो जाड्यं समाधिर्नेति चेद्वद ॥

अन्यत्रापि तथैवानुभवस्तुल्योऽवलम्बनम् ॥ ४८ ॥

विश्लेषेति । विश्लेषानन्दत इत्यस्य विश्लेषादानन्दाच्चेत्यर्थः । अन्यत्रापि तथैव वदेति सम्बन्धः। अन्यत्र=प्रेमासंवलितयोगसमाधौ । एकस्मिन्विषये एतावन्तं कालं समाहितोऽहमिति प्रत्ययस्तु प्रेमासंवलितयोगसमाध्युत्तरमिव प्रेमसंवलितयोगसमाध्युत्तरमविशिष्टः ।

प्रसङ्गादानन्दभरकार्यान्तरमप्याह—

आनन्दोद्रेकतः क्वापि समाधेर्वान्तिमा दशा ॥

आनन्दोद्रेकत इति ।

ननु शोकस्य चरमदशाप्रदत्वं नानन्दस्येत्याशङ्कायामानन्दस्यापि तद्भवतीति दृष्टान्तेनोपपादयति—

कर्पूरातिशयोत्पन्नशैत्यादीव विजृम्भते ॥ ४९ ॥

कर्पूरेति ।

ननु युक्तिविरुद्धमानन्दस्य तथात्वमित्याशङ्कायामाह—

तापकत्वं यथा शोके तथानन्दभरेऽपि तत् ॥

आनन्दादश्रुपातानां जनिः स्यादन्यथा कथम् ॥५०॥

तापकत्वमिति । तत्=तापकत्वम् । हरिदासेन तूदाहरणानुपलब्धेः पक्षोऽयं नोदाहृतः ।

कलितप्रेम्णि विशेषमाह—

विषये कलितावस्थापाको निर्वेदहेतवे ॥

सेव्यमानेऽपि विनयाद्युपायैः क्षयदूषिते ॥ ५१ ॥

विषय इति । निर्वेदो=हेयताबुद्धिः । विषये=सांसारिककामिन्यादिलक्षणे । ननु किञ्चिदङ्गवैगुण्येन जायमाना कलितावस्था तापनिर्वेदायास्तामिति चेत्तत्राह—विनयाद्युपायैरिति । विनयभयभजनादिभिरुपायैरित्यर्थः । भयं प्रेमविषयेणान्यथा न मन्तव्यमित्यनवरतचिन्तनोत्थम् । ननु विषये दोषाणामसत्त्वे कथं दोषदृष्टिस्तत्राह—क्षयेति । क्षयरूपदोषयुक्त इत्यर्थः । तथाच कलितपाकः कथमतिकमनीयोऽप्ययं विषयोऽपचयादिभागिति स्वविषये दोषदर्शनोत्पादनद्वारा निर्वेदहेतुर्भवतीत्यर्थः । नचैवं दोषदर्शननाश्यत्वरूपहार्द-

लक्षणस्यातिव्याप्तिः । यावद्विषयवैतृष्ण्यानुपधायकत्वस्य दोषदर्शने विवक्षितत्वात् । हार्दनाशकदोषदर्शनस्य हार्दविषये वैरस्योत्पादकत्वेऽपि न विषयमात्रे तदुत्पादकत्वमतो हार्दे लक्षणस्य सम्भवः । अत एव न यावत्पदवैयर्थ्यम् ।

हेत्वन्तरादपि निर्वेदमाह—

तथा कलितपाकोत्थसंशुद्धिभृतचेतसः ॥
अप्यन्यविषयाद्दृष्टदोषान्निर्वेद इष्यते ॥ ५२ ॥

तथेति । अप्यन्यविषयात्=कलितविषयभिन्नविषयादपि ।

हार्दपाकजनिर्वेद इव नात्र निर्वेद इत्यभिप्रेत्याह—

निर्वेदोऽत्र समस्तेषु विषयेषु वितृष्णता ।

निर्वेद इति । अत्र=कलितपाके ।

निर्वेदफलमाह—

इहैव जातनिर्वेदः प्रतिबन्धे भवान्तरे ।
जाताविकारः सन्तृप्तप्रेमभागेव जायते ॥ ५३ ॥

इहेति । इहैव=अस्मिन्नेव भव इत्यर्थः । प्रतिबन्धे=आमयादिनेति शेषः । अविकारो=निर्वेदः । "यदहरेव विरजेत्" इत्यादिनोक्तसन्तृप्तप्रेमभागेव न तु प्रेमान्तरभागित्यर्थः । कलितपाकशून्यस्यैव तद्भागित्वात् ।

प्रकृतमाह—

पाण्डुलेखोऽत्र विश्लेषभयलालसयोः क्वचित् ।
आक्षेपस्यापवादस्य खलोक्तिसहनस्य च ॥ ५४ ॥

पाण्डुलेख इति । अत्र=कलिते । क्वचिदित्यग्रेऽन्वेति । कामिन्याद्याश्रिते कलिते इति तदर्थः । विश्लेषभयलालसे तु कलितमात्रसाधारणे द्रष्टव्ये । आक्षेपो द्विविधः प्रेमविषये तत्पुरोऽन्यस्मिन् ।

आद्यो यथा--

त्वयि कृष्ण ! क्वचिद्याते यो मां विधुरतापयत् ।
पश्योरीकृतकौटिल्यं तमद्यापि निजोरसि ॥

द्वितीयो यथा--

मलयानिलशीतांशुकुहूण्ठकृतीः प्रिय ! ।
न वदामि नृषावक्रीमतनुर्मां करिष्यति ॥

अत्र प्रेमविषयस्य प्रियस्य पुरो मलयादीनामाक्षेपः । दलितादौ तत्सुहृदोऽग्रे । तद्गोचरो यथा--

भविकमुद्धव ! तस्य समुद्धृतं स कुशली मुशली त्वमहो ययोः ।
यदि न नन्दवधूर्जननी तयोरहह का वयमालप निस्त्रपाः ॥

अत्र वियोगिन्या उक्तिः । प्रेमविषये प्रेमाधारसुहृदो यथा—

साधुनि रमणीपात्रे मामककरतो निवेश्य सुस्नेहम् ।
ज्वलयितुमेव दशां तां कुलदीप ! तवोचिता रीतिः ॥

प्रेमविषयभिन्नं प्रेमाधारस्य प्रेमाधारान्तरं प्रदर्श्य प्रेमविषये आक्षेपः ।

यथा प्राचीनोदाहरणम्—

प्रियसखि ! लज्जाजलधौ मज्जामः किं वदामोऽत्र ।
रज्ज्वा सेवितचरणः कुब्जा चरणौ प्रसाधयति ॥

एवं प्रेमाधारकर्तृकः क्रिययाप्याक्षेपः सम्भवति ।

यथा—

अन्याङ्गनासङ्गमचिह्नचित्रं कान्तं समायान्तमुदीक्ष्य बाला ।
सञ्जाततल्लोचनपातमीषत्करेण भालस्थलमाजघान ॥

हार्दाधारकर्तृकस्तु स्वसुहृदोऽग्रे यथा—

चतुरिमकलाकण्ठच्छेदो मनोभववञ्चनं
दृषदि मधुनो लिप्सा लोके विडम्बनमात्मनः ॥
उपरि परितः सङ्कल्पानां शिलाशतपातनं
सहचरि ! परीतापस्थानं खले हृदयार्पणम् ॥ इति ।

इदानीं प्रसङ्गादन्यदुच्यते । पुनराक्षेपो द्विधा मृदुः कर्कशश्च । तत्र सख्या दूत्या वोक्तौ द्विविधोऽपि सम्भवति ।

तत्राद्यो यथा—

रागस्त्वयि तया न्यस्तः पदापि सुषमावहः ।
अतो मत्तोऽपि लक्ष्मीश ! तद्वैदग्ध्यमलौकिकम् ॥

अत्र किमनुचितं करोषीत्याक्षेपस्तद्वैदग्ध्यवर्णनव्याजेन व्यज्यमानतया च किंचित्पिधानान्मृदुः ।

यथा वा—

शोकोत्पत्तिरशोकतः सुमनसो यद्वैमनस्योदयो
वैरस्यं च रसालतो विकलता तावत्कलानां निधेः ।
किञ्चान्यन्नलदं भवत्यनलदं निर्णीतमेतावता
वामः केवलमेक एव न भवांस्तस्यामशेषं जगत् ॥

भवानिति तद्गोचरप्रेमाधार इत्यर्थः । हगृहीतबाढमानायामपि मृदुरेव ।

स यथा—

श्रुतिपथमुपयातान्नाममात्रात्तदीया—
ज्ञपति न कतमो नु क्षीणशोकोऽत्र लोकः ।
यदतुलचरितौघैः श्राविततैरप्यजस्रं
विरमति न कथं ते हन्त हृद्ग्रन्थिरेषः ॥

अत्र हृद्ग्रन्थिपदान्माने बाढता द्योत्यते । पूर्वार्द्धे च स्वकर्तृकव्यापारेण श्रुतिपथे तन्नामागमनोक्तेरानुषङ्गिकमपि तन्नाम श्रवणजपमग्नलोकशोकमपाकरोतीति । उत्तरार्द्धे तु मानस्यैवास्यापराधो न तु तवेति गम्यते ।

द्वितीयो यथा—

राधालोचनगोचरोऽयमुदितो गोपोऽपि वैदग्ध्यभू-
रित्याकारयशोऽतिशोभनमभूद्भूमौ महीयस्तव ।
तत्प्राणग्रहणेन सम्प्रति हरे ! सर्वात्मना भाविनीं
शुद्धो गोप इति प्रथामवितथामाप्तुं किमुत्कण्ठसे ॥

यथा वा—

कृष्ण ! वृष्णिकुलचन्द्र ! कथ्यसे भानुवद्व्रज न जातु मित्रताम् ।
स्वावलोकनविलासिपद्मिनीजीवनापहृतिबद्धविक्रमाम् ॥

क्वचित्कर्कशोऽपि कथंचित्समाहितः कामपि मृदुतां भजते ।

यथा—

शिलापि सा साधुगतिर्यदङ्घ्रेः संस्पर्शमात्रेण सचेतनासीत् ।
राधे ! तदाराधनवैभवेन त्वं तादृशी नेति कलेःप्रसादः ॥ इति ।

प्रेमाधारस्य तु प्रेमविषये आक्षेप एव नोचितः । यदि कथञ्चिदुचितस्तदा मृदुरेवेति हरिदासः ।

स यथा—

निवेश्य कतमं दोषं वत्स ! त्वामपि मामिव ।
हन्त त्यजति ते बन्धुस्तं कालं कलयामि न ॥

अत्र वने श्रीराममुक्तायाः सीताया लक्ष्मणं प्रत्युक्तिः ।

यथा वा—

त्वत्तो मामिव तां शक्तिं धियं मन्ममतामपि ।
नाथापहृतवानेष यतोऽद्यापि विलम्बसे ॥

अत्रान्तःकरणोपनीतं श्रीरामं प्रति सीतोक्तिः । एषः=रावणरूपस्तस्करः ।

अन्यच्च —

रूपलावण्यवैदग्ध्यसौभाग्यैरन्वहं रमाम् ।
यदनादृतवत्यस्मि तत्कृष्ण ! समुपस्थितम् ॥

अत्र सम्प्रति मामपहाय परां कामयस इत्याक्षेपः । अन्यस्याप्यभियुक्तस्य यथा—

आवयोरिव भवेदनुरागो नावयोरिव विधिर्विपरीतः ।
वत्स ! गच्छ मम वाचिकमेतत् श्रीमदार्यचरणे कथनीयम् ॥

अत्र विधिं प्रत्युपलभ्यमानोऽप्याक्षेपस्तद्द्वारा श्रीरामं प्रत्येव पर्यवस्यति ।

यथा वा--

दिशि दिशि परिहासगूढगर्भाः पिशुनगिरो गुरुगर्जनं च गेहे ।
सहचरि ! हरये निवेदनीयं भवदनुरोधवशादयं विपाकः ॥

अन्यच्च--

नीचोच्चं सृजतो विधेरपविधेर्धीरेव लीना क्वचि-
द्वासोऽधस्तनमप्युपेक्ष्य विहरन्नाक्षेपपात्रं हरः ।
प्राप्तश्रीरसि बुद्धिमानसि हरे ! त्रातुं प्रवृत्तोऽप्यसि
त्वं सन्तप्तजनावलोकनविधौ किं मुद्रयस्यक्षिणी ॥

यथा वा—

आर्ये ! प्रयासि यदि तां नगरीं प्रयाहि
पृच्छेथः स तत्र मिलितो मम वाचिकेन ।
पृष्टस्य का गतिरिति स्वजनार्चिदातुः
किं प्रच्छके प्रतिवचस्तदिदं वदेति ॥ इति

अत्र मथुरां गच्छन्तीं काञ्चित्प्रति गोप्युक्तिः । प्रेमाधारकृतः कर्कशाक्षेपोऽपि वृत्तान्तस्य परोक्षीकरणेन स्तुतिपर्यवसानेन हितोपदेष्टृत्वेन कुनायकेनाक्षेप्यसाधारणधर्मेणाप्रस्तुतप्रशंसयार्थान्त-

रचुम्बनादिना वा गोपायितः कथंचिदौचित्यमावहति । तत्र क्रमेणोदाहरणानि ।

आद्यं यथा प्राचां—

तिर्यक्त्वं व्रजतु प्रतारयतु वा धर्मक्रियाकोविदं
हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु ।
वेदान्निन्दतु वा हिनस्तु जनतामन्याङ्गनाः श्लिष्यतु
स्वामिन्यस्य गृहे विलासमयते लक्ष्मीः स पूजापदम् ॥

द्वितीयं च गोविन्दचक्रवर्तिनः—

वृषं वेत्सि चेन्मां तमेवाधिरूढः कलङ्कीतिचेन्मूर्ध्नि धत्से तमेव ।
द्विजिह्वं पुनश्चेत्स ते कण्ठभूषा त्वदङ्गीकृतौ शर्व ! सर्वोऽपि भव्यः ॥

अत्रायमयोग्य इति धिया मां यदि त्यजसि तदा भवानपि मादृश एवेत्याक्षेपो भक्तकृतस्तुतिपर्यवसानेन गोपायितः ।

तृतीयं यथा—

मत्प्रेमपात्र ! यदुनायक ! काममेवं
त्वद्गोचरैव मम भीः सततं चकास्ति ।
माभूत्त्वयि प्रबलपातकपालिवहा-
वहाय देव ! मदनुद्धरणात्कलङ्कः ॥

अत्र मदनुद्धरणात्तवायं कलङ्को भविष्यत्येवेत्याक्षेपो हितोपदेष्टृत्वेन कथंचिदाच्छादितः ।

चतुर्थं यथा—

खलश्रेणीनिर्यद्धनवचनबाणाहतिभृतां
धनालाभव्यापद्विकलसुतदारानुगधियाम् ।
जनानां दीनानामवनकरणप्रौढचरितः
किमन्तर्मालिन्यं भजसि कमलाकान्त ! कुशलम् ॥

अत्र किमन्तर्मालिन्यं भजसीत्यनेन प्राप्तः कर्कशाक्षेपः कुशलप्रश्नेन मृदुतां नीतः ।

पञ्चमं यथा प्राचाम्—

कतिपयदिवसस्थायिनि मदकारिणि यौवने दुरात्मानः ।
विदधति तथापराधं जन्मैव यथा वृथा भवति ॥

अन्याङ्गरामनुसरन्तप्रेमविरंसतिप्रशधारारापा । ( ? )

षष्ठं यथा—

भ्रमर ! भ्रम केन वार्यसे भ्रमभागित्यपि केन भाष्यसे ।
भवता भजता लतागणं मम माधुर्यपि नाश्रिता क्वचित् ॥

यथा वा—

रत्नाकरोऽसि हरिणापि समादृतोऽसि
मैनाकनामगिरिणापि निषेवितोऽसि ॥
एकं वदामि जलधे ! यदि ते न कोप-
स्तत्कर्म साधय पयो बत येन पेयम् ॥

सप्तमं यथा—

त्वदीयैश्चरितैरेतैः सुत ! मे मतिरागता ।
त्वाममुष्मिन्गृहे बद्ध्वा स्यामहं शर्मभागिति ॥

एवमन्येऽपि प्रकारा हरिदासोक्ता अप्यनतिचमत्कृतेर्मयोपेक्षिताः । अथ कथय कथं तर्हि—

न नन्दतो जनिस्तस्येत्युदन्तः कर्णतायनः ।
इहास्ते तद्वद स्वस्याप्युदन्तं तत्सखासि यत् ॥ इत्यादि,

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥

इति कर्कशाक्षेपपरमभियुक्तस्य कवेः कालिदासस्यापि पद्यं श्रूयत इति चेदिह परवचनविश्वासजडीकृतमनोभिर्भवद्भिरेवनतु प्रेमसरणिसञ्चराचित्तचणैस्तादृशवर्णजानिसमसमयमेव पिहितकर्णविवरैरस्माभिरित्याह हरिदासः । गुणाकरमुखास्तु प्रागुक्तकर्कशाक्षेपे रुददश्रुमार्जनेनेव रोषनाश्येन समाधानमारभन्तः प्रकटीकृतसकलसज्जनवचनविद्वेषा इव स्पष्टमुपलभ्यन्त इत्यलमतिविस्तरेण ।

मूले आक्षेपस्येत्युपलक्षणमाक्षेपातिरिक्तोक्तिनाम् । तत्र प्रेमाधारस्य प्रेमविषयमित्रे—

यथा प्राचाम्—

अयि मुरलि ! मुकुन्दस्मेरवक्त्रारविन्द-
श्वसनरसरसज्ञे ! त्वां नमस्कृत्य याचे ।
अधरमधुरबिम्बं प्राप्तवत्यां भवत्यां
रहसि कथय कर्णे मद्दशां नन्दसूनोः ॥

यथा वा—

तस्याज्ञया निजसुखं समुपेक्ष्य भद्रे !
मुद्रे ! मदन्तिकमितासि न चित्रमेतत् ।
मौनं किमेतदिह तद्विरहाद्दुतैनां
प्राणेशदुःखदतनुं धिगिति प्रकोपात् ॥

सखीं प्रति यथा प्राचाम्—

तत्किं काममपि कामिनीमनुसृतः किंवा कलाकौतुकै-
र्बद्धो बन्धुभिरन्धकारिणि वनोपान्ते किमु भ्राम्यति ।
कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः
सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेषु यन्नागतः ॥

प्रेमाधारस्य स्वात्मानं प्रति यथा—

कुलानुसारिसरणिर्यत्कृते दूरतः कृता ।
तस्मिन्पतति पादान्ते जीव ! मानं वृथा कृथाः ॥

उदासीनं प्रति यथा—

कोऽसि त्वं यमराजोऽस्मि किमागमनकारणम् ।
जीवस्य नयनं सत्यं स तु वस्त्रहृता हृतः ॥

प्रेमविषयं प्रति यथा—

कालेन बहुना देव ! दृष्टोऽसि मधुसूदन ! ।
इदानीमेव किं जातः प्रायो दुरितसङ्क्षयः ॥

इत्यादि बोद्धव्यम् । अत्र कतिपयोक्तयः कलितप्रेमदशायां नोचिता दलितप्रेमजन्यत्वात्, तथापि कलितप्रेमजन्यत्वानपायादिहापि प्रसङ्गादुक्ता इति ध्येयम् । कलितोत्तरदलिते जायमानोक्तिषु कलितस्यापि परम्परया जनकत्वमिति भावः । प्रेमविषयस्य प्रेमाधारप्रसक्तिर्यथा—

सहैव कर्णाभरणप्रसूनैरिहैव बालातपतापितासि ।
दिनान्तगम्यानि वनान्यमूनि त्वं केन वैदेहि ! विलङ्घयेथाः ॥

अत्र पतिविषयप्रेम्णा कतिपयपदानि सह तेन गत्वा समुदितश्रमां सीतां प्रति श्रीरामस्योक्तिः । प्रेमाधारस्य सख्याः प्रेमविषयं प्रत्युक्तिर्यथा—

न जाने किं पुण्यं विहितममलं जन्मनि पुरा

मुरारे ! मारारेरपि न विषयो याद्धि मनसः ।
यदस्या नेत्रस्यायतनमसि रस्यार्थकथन-
प्रवीणस्यालस्यालयबहुतपस्याथ वपुषः ॥

यथा वा—

आयुःपथे महति सन्त्वरतोऽप्यमुष्या
जीवस्य हन्त विरहातिकृशाङ्गयष्टेः ।
आलम्बनाय यदुनाथ ! तदाविरासी-
द्यष्टिस्त्वदङ्घ्रिसरसीरुहवीक्षणाशा ॥

प्रेमाधारस्य प्रेमविषय आक्षेपाभासो—

यथा—

स्वसायुज्यं दातुं तव भवतु शम्भोऽद्य कतमः
श्रमोऽमुष्मिन्नेतां शिरसि सरितं योजयसि चेत् ।
लिपिर्भाले वह्निर्गरलमपि कण्ठेऽस्ति वचनं
भुजङ्गा विद्वेषाः परिजनकलापोऽपि वृषभः ॥

सख्याः प्रेमाधारं प्रत्युक्तिर्यथा—

जलजामपहायैष सुराविषसहोदराम् ।
वैदग्ध्यमधुना ध्येतुमागतस्ते कृपा यदि ॥

अत्रोचिताऽस्तीति शेषः । एता उक्तयः सर्वाः प्रेमाभिव्यञ्जिका इत्यलमनल्पेन ।

हार्दसौहार्दयोरेते केवलैव विडम्बना ।
तदा न सा यदि प्रेम फलेते लाभभाक्कृती ॥ ५५ ॥

हार्देति । एते=अपवादखलोक्तिसहने । केवलेति । सम्भोगमात्रफलत्वे लोभादिहेतुकसम्भोगफलकपरिचयवत्पार्यन्तिकमधुरतरप्रेमरूपफलशून्यतया व्यर्था विडम्बनेति भावः । अत्रापवादमाह—तदेति । सा=विडम्बना । यदीति । अत्र यदिशब्दग्रहणाद्धार्दसौहार्दयोरनन्तरं प्रेमोत्पद्यत एवेति नियमो नास्तीति सूचितम् । ननु तयोः प्रेमफलत्वे किमायातं तत्राह—लाभभागिति । लोके लाभभाजो जनस्य चतुरत्वादिति भावः ।

प्रेम्णि सा न विडम्बनेति परिहरति—

तृप्त्यन्तपरमप्रेमलाभोऽलभ्यफलोदयः ।

तृप्यन्तेति । अलभ्यस्य फलस्य प्राप्तिरूपः फलोदयः ।

ननूप्तादिषु सा स्यादेवेत्याशङ्कायामुत्तरमाह—

उप्तादिभूमिकालाभे स्यादेवोत्तरभूमिका ।

उप्तादीति । न ह्युप्तादिकमुत्तरावस्थामजनयित्वान्तराल एव नश्यतीति सम्भवति ।

हठात् प्रेमा भग्नः सदसिरिव सन्धिं न लभते
लभेतापि प्रायः स्खलति खलु यत्नैरपि धृतः ।
स्खलेन्नो चेत्साम्यं भजति न भजेद्वा च्युतिभयो
भवेन्नोचेदेष स्मृतिमुपगतस्तु व्यथयति ॥

इत्यादौ तु प्रेमशब्दोऽनुरागसामान्यपरः ।

पुरा न जायते प्रेम जातं चेन्न विनश्यति ।
यदि नश्यति चेत्तन्न प्रेम रागो हि केवलम् ॥

इतिभक्तिरत्नाकरोक्तेः ।

गतः सोऽपि तिलः स्नेही सूनं तच्चोपकारकम् ।
इदानीं केवलं स्नेहः शिरसा परिवाह्यते ॥

इत्यादौ प्रस्तुतेन प्रस्तुतार्थपरेण हार्दमेवोक्तमिति मन्तव्यम् ।

एतस्यानन्तरं दैवाज्जायते दलितं यदि ॥५६॥
एतद्विदलितं प्राहुर्विश्लेषो जीवितावधिः ॥
अथवाऽऽस्मृति विज्ञेया व्यवहारानभिज्ञता ॥५७॥

एतस्येति । एतस्य=कलितस्येत्यर्थः । विश्लेष इति । "उत्पत्तावस्य विश्लेष" इत्यादि पूर्वमभिहितं विदलितप्रेमविषयमित्यर्थः नतु ललितविषयम् । पूर्वमनुक्तमपि मिलितोत्तरं दलितं सुसम्भवं दैवाद्भवितुमर्हत्येवेत्यभिप्रायेण गुरुचरणैरुक्तम् । ललितप्रेमोत्तरमाविदलितप्रेमविषयकं जीवितावधित्वं चास्य यथा तथा "साकारमेव गुरुलोकविलोचनेभ्य" इत्युदाहरणे प्राक् प्रपञ्चितम् । गुणाकरस्तु अमुमेव पक्षमपरीतिप्रदर्शनेनोदाहरति ।

यथा—

सीतालक्ष्मणविश्लेषयोग्यप्रतिनिधेर्विधौ ।
वैकुण्ठगमने रामः सदेहोऽयोजि वेधसा ॥

विश्लेषयोग्यप्रतिनिधेः=विश्लेषे योग्यस्य देहत्यागरूपस्य कर्मणः प्रतिनिधेरनुकल्पस्येत्यर्थः। पक्षान्तरमाह—"अथवेति। एतच्च कलितानन्तरं दैवाद्दलिते जाते विदलितप्रेमैव जायत इति मन्यमानस्य तन्त्रामृतकारस्य रीत्याभिहितम्। हरिदासादयस्तु एतत्तन्त्रामृतकाराभिहितं सम्भवत्स्थलविशेषाभिप्रायं न तु नियमपरम्। विदलितानन्तरमपि पुनः कलितप्रेमोदयदर्शनात्। अत एव—

उन्मूलितासि शबरैः शबरवधूभिस्त्वचावशिष्टासि।
इन्दावुदयिनि कुमुदिनि! तदपि स्मेरासि साधु ते प्रेम॥
अनुपमसुखसारश्रेणियुक्ताधुनैषा
व्रजतु विरहखेदागारमित्याशयेन।
विदलितललिताभा भाविता वेधसैव
प्रसृमरकरुणेन ह्यद्य जानेऽन्वकम्पि॥

इत्याद्युपपद्यत इत्याहुः। नचैवं हार्दोत्तरदलिते हार्दस्येव ललितमिलितोत्तरवर्त्तिदलिते ललितमिलितयोः प्रेम्णोर्नाशानभ्युपगमेनैव भेदसम्भवात्। अत एव "उन्मूलितासि शबरैः" इत्यत्र न हार्दोत्तरदलितस्यावकाशः स्मेरतानुदयप्रसङ्गात्।

भावना गीयते चास्मिन् गाढप्रेमसमाधिजा ॥५८॥

भावनेति। अस्मिन्निति विदलिते इत्यर्थः। गाढेति। ललितमिलितोत्तरवृत्तिनि दलिते समाधिर्ललितमिलितप्रेमविषयक एव। अयं तु कर्मेन्द्रियाभिमुख्यलक्षणकलितप्रेमहेतुतापकधर्मविशिष्टधार्मिविषयकस्तेन गाढ इत्यर्थः। चिरकालावस्थायित्वरूपा गाढता तु न वाच्येति गुप्तपादाचार्यैरेव तन्त्रामृतेऽभिहितम्। युक्तं चैतत्। दलितप्रेमसमाधिरचिरस्थायी विदलितप्रेमसमाधिश्चिरस्थायीत्यत्र न किञ्चिन्मानमस्ति।

इह विशेषमाह—

विषयात्ययसञ्जातदलितस्थ सुमेधसः।
चलितादिमुखालोकमन्तरा गलिते स्थितिः ॥५९॥

विषयेति। आदिना क्रान्तविहृते स्थितिर्जायत इति शेषः। अस्यायमर्थः। यत्र कलितप्रेमविषयेण सता प्रियेण विश्लेषः तत्र प्रेमाधारस्य चलितादिमुखावलोकनपूर्वकमेव गलिते स्थितिः। यत्र तु

विनश्यता विश्लेषस्तत्र त्वेषा रीतिरिति । अत्र विदलितप्रेमा यथा—

बत सखि ! कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन् रागिलोके तथाहि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥

एतत्प्रतिपाद्यप्रेमाधारसख्याः प्रेमविषये प्रसक्तिर्यथा·
वियोगरोगराजेन क्षीणायाः किं महौषधम् ।
नाथ ! सा मृगशावाक्षी मृगाङ्केनापि ताम्यति ॥

ननु कलितोत्तरं दलितस्य यथा नामान्तरेण व्यवहारः क्रियते तथा मिलितानन्तरोत्पन्नदलितस्यापि ललितोत्तरवृत्तिदलिताद्भेदेन ज्ञानाय नामान्तरेण व्यवहारः कुतो न कृत इत्याशङ्कायामुत्तरमाह—

ललितीयात्तु दलितान्मिलितोत्तरवर्त्तिना ।
दलितेनातिवैचित्र्यमतस्तद्गणना कुतः ॥६०॥

ललितीयादिति । तद्गणना=मिलितोत्तरभाविदलितगणना । अयं च विदलितप्रेमारम्भदशाशंसाप्रश्नवितर्कचिन्तोपालम्भाद्यमितफल· जनक इति तन्त्रामृतादिषु बहुविधोदाहरणद्वारा प्रपञ्चितपल्लवोऽस्तीति मयापि कतिपयोदाहरणैः समासादाविष्क्रियते ।

तत्र विदिलितप्रेमतापो यथा

न राधाविश्लेषः क्षणमपि तवाधातुमुचितो
विधुर्वक्त्रस्यास्या नयनयुगलस्यापि कमलम् ।
कचानां सा रात्रिः सुहृदिति कथं वेत्सि न हरे !
प्रमादे सञ्जाते कथमिव न ते स्युस्त्वदरयः ॥

विदलितप्रेमारम्भदशा यथा प्राचाम्--

अद्य स प्रवसतीति सुभ्रुवः श्रोत्रसीमनि विजृम्भिते ध्वनौ ।
सद्य एव निजपाणिगुम्फिते पुष्पदामनि महोरगभ्रमः ॥

आशंसा यथा--

जीव ! त्वमाशुगमनोत्सुककान्तदृष्टि-
दृष्टे मदीयनयनद्वयवर्त्मनैव ।
निर्गच्छ मा पुनरसौ विमुखस्य तस्य
कर्णे प्रयातु मम जीवनजः कलङ्कः ॥

अत्र स्वजीवं प्रत्याशंसा ।

यथा वा--

शच्यादिप्रमुखासु यौवनभरप्रोद्भिन्नमोदाङ्कुर-
क्रान्तासूत्कटकामतन्त्रकलिता काचित्कथा शिक्षिता ।
शक्रेणाद्य तवाङ्घ्रिपङ्कजयुगादध्येतुमामूलत-
स्तत्तन्त्रं गुरुणाप्यनाप्तविषयं श्रीमोद्धवे ! वाञ्छयते ॥

पूर्वोदाहृतावाशंसा वास्तवी इह तु कल्पितेति विशेषः ।

दृष्टवानसि मातङ्ग ! मत्तमातङ्गगामिनी ।
मृगितास्ति मृगीयूथ ! मृगीचपललोचना ॥
पाणिकान्तिनिरस्ताब्जवृन्दाब्ज ! पथि लक्षिता ।
वेत्सि कोकिल ! संसारसारवागभिधायिनी ॥

यथा वा—

नायुषो विषये तस्य हरेर्ज्ञानिक ! पृच्छ्यसे ।
अस्मदर्पितभूयिष्ठजीवनस्योदयः परम् ॥

अत्र प्रश्नः ।

कमलकोकवियोगिवधूजनज्वरकरोऽजनि पूर्णकलानिधिः ।
ननु विधेरबलाविरहानलप्रवलतापभृतो न यतोऽजनि ॥

अत्र वितर्कः ।

सञ्चारेण करेण···रमणीदृग्भ्यां कृता वैरिणी
मूर्त्या मूर्छितकामया वरतनोर्वद्धक्रुधो वीरुधः ।
पार्श्वे तिष्ठतु कस्य कं पुनरियं हा हन्त सम्भाषतां
कस्मै वा विनिवेदयेत्परिभवं कुञ्जे स्थिता मैथिली ॥

अत्र चिन्ता । उपालम्भस्तु कलितप्रेमावसर एव दर्शित इति नेह पुनरुदाह्रियते । आदिपदेन कृशतादि ।

तद्यथा--

क्षैण्येऽपि संशयस्तस्या वियोगे तव जाग्रति ।
योगेऽपि शिवयोर्देव ! देहार्धमपि नेक्ष्यते ॥

अस्य च तापकश्रेणिभवनक्रमेण व्यक्तीभवनं कविना क्रियमाणं चारुताहेतुरित्याह हरिदासः ।

यथा—

अङ्कतोऽपि शयनादपि गेहाद्ग्रामतोऽपि नयनादपि दूरम् ।
एष गच्छति हरिर्मधुपुर्यां धातुरेव विषमो व्यवसायः ॥

अत्र क्रमेणाभिधीयमाना अङ्कादिपरित्यागास्तापका बोध्याः । असौ च सख्यादिवचनव्यक्तीकृतो यथा चमत्कारितां भजते तथा न प्रेमाधारादिवचसा । तद्वचसा व्यक्तीकरणे तु व्याजाद्यपेक्षा चारुता मूलम् ।

तद्यथा—

मद्वाचिकेन पथिक ! त्वया वाच्यः श्रियः पतिः ।
कण्ठमात्रस्थितप्राणा जननी दृश्यतामिति ॥

तत्र सख्यादिद्वाराभिव्यक्तो यथा प्राचाम् ।

स्निग्धे यत्परुषासि यत्प्रणमति(१) स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन् प्रिये ।
तन्मन्ये विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥

यथा वा—

हारस्य स्तनसीमयाऽधररुचा हास्यस्य लास्यस्य च
भ्रूवल्ल्या वलयस्य बाहुलतया चिन्तामणेर्नासया ।
नेत्रस्याञ्जनरेखया समुदितो रागस्य वृन्तत्विषा
तस्यास्त्वद्विरहे कया न विरहः कस्यालमासादितः ॥

अत एव सख्यादिद्वारकमेवास्याविष्करणं चमत्कारीति मन्यमानो हरिदासः कालिदासोक्तपद्यार्थे प्रेमाधारान्तरं परिकल्प्य पद्यान्तरेणाविष्करोति ।

यथा—

त्वामालिख्य प्रणयकुपितां धातुरागैर्धरायामात्मानं ते चरणपतितं संविधत्ते स यावत् ।
अस्रैस्तावन्मुहुरुपाचितैर्लिप्यते तस्य दृष्टि-
र्धातुस्तस्मिन्नपि न सुसहस्तावकस्तस्य योगः ॥

इत्यलं पल्लवितेन ।

विदलितप्रेमपाको यथा—

वीणामङ्के कथमपि सखीप्रार्थनाभिर्निधाय
स्वैरं स्वैरं सरसिजदृशा गातुमारब्धमालि ! ।

(१) सप्तम्यन्तमेतत् ।

तन्त्रीबुद्ध्या किमपि विरहक्षीणदीनाङ्गवल्लीमेना—
मेव स्पृशति बहुशो मूर्छना चित्रमेतत् ॥

नचेदं मूर्छारूपफलोदाहरणमिति शङ्क्यम् । प्रेमाधारकर्तृकफलप्राप्तिवर्णन एव फलोदाहरणतायाः प्रकृतशास्त्रे परिभाषितत्वेन प्रकृते तदभावात् । अत एव—

इयं दिक्षु समस्तासु चन्द्रशेखरमीक्षते ।
स तु प्रमादादपि न प्रेम्णैनां कथमीक्षताम् ॥

इति श्लोकेन जटिलवेषधारिणं शिवं प्रति गौर्याः सखीद्वारेण सर्वत्रेक्षणरूपं दलितं प्रेमफलं प्रदर्श्य

क शम्भुः स इहास्तीति बहुधा बोधितामपि ।
तदेकगोचरा दिक्षु भ्रान्तिरेनां न मुञ्चति ॥

इति श्लोकेन तन्त्रामृतादिषु विदलितपाकः प्रदर्शित इति दिक् ।

इदानीं छलितमाह—

प्रेमानुयायिरोषेण द्रुतप्रेमात्मकं भवेत् ।
छलितं प्रेम तत्प्रोक्तमारम्भो गर्वयाञ्चयोः ॥ ६१ ॥

प्रेमेति । अस्यार्थः । प्रेमाधारगतस्वेतराविषयकानुरागप्रतिपत्त्या प्रेमाविषये नायकादौ जातेन प्रेमाधाराविषयकप्रेमानुगतरोषजनितकलहेन प्रेमाधारे द्रुतस्य चित्तस्य प्रेमविषयाकारश्छलितं प्रेमेति । यद्यपि तन्त्रामृते नायिकानायकोभयनिष्ठः सामान्यतः प्रेमरोषो निरूपितः तथापि हरिदासेन प्रेमाविषयेऽपि नायके प्रेमकलहो न वर्णनीयः। किन्तु प्रेमविषये नायिकायामेव। यदि पुनर्नायकनिष्ठत्वेनापि स कथञ्चिद्वर्ण्यते तर्हि नायिकां मानवतीमनु ।

तद्यथा-

विधाय तां विधिः पश्चान्नाकरोन्मुकुरं विना ।
नापरा तादृशी तस्मान्मानं मुञ्चानु मानिनीम् ॥ इति ।

अत्र मानिनीमित्यनन्तरं तामिति शेषः । अत्र गृहीतानुनयां राधामनु स्वयमपि गृहीतमानं श्रीकृष्णं प्रति तद्दूतिकाया उक्तिः। छलितावस्थां रचयितुमाह—आरम्भ इति । गर्वयाञ्चयोः प्रेमविषयनिष्ठयोः ।तथा च प्रेमविषयनिष्ठाभ्यां ताभ्यां गर्वयाच्ञाप्रतीकारसमर्था उक्तिप्रणतिशपथाभिनवार्पणादिक्रियाः प्रेमाधारे छलिताव-

स्थासंयोग इत्युक्तं भवति । तत्रोक्तिः प्रेमाधारस्य तद्दूत्यादेश्च समुचिता, प्रणतिश्च प्रेमाधारस्य, शपथस्तु द्वयोरिति बोध्यम् ।

तत्र प्रेमाधारस्योक्तिर्यथा--

लोके त्वत्सदृशी नेति द्रष्टुमेव मयेक्षिताः ।
अमाना योषितस्ता न मुग्धे ! मानपरिग्रहे ॥

यथा वा--

अस्या गृहीतमानाया मुखेनापहृतप्रभः ।
अकिञ्चित्कर एवास्ति मामयं तापयन्नपि ॥

अत्र कमनीयतममहासि चन्द्रमसि कथं तेऽद्यापि मान इति नायिकां प्रति वादिनीं तत्सखीं प्रति नायकस्योक्तिः ।

अपरं वा--

द्वैधीकृत्य हिमांशोः कलाकलापं रदान् विधिर्विदधे ।
अङ्केन सन्धिबन्धानधरं सुधया प्रवीणस्ते ॥

दूत्यादेरुक्तिर्यथा--

कथञ्चिल्लक्षणीयोऽयं श्रुत्या सततसक्तया ।
त्वदीयपदलक्ष्योऽपि त्वया नीतोऽस्ति वाच्यताम् ॥

यथा वा—

शीलसौजन्यवात्सल्यैर्मुक्तोऽयमिति निश्चितः ।
त्वयाद्य राधे ! प्रागेव मयाऽधेस्तनयां त्यजन् ॥

यथा वा—

प्रेमभरादतिपृथुलादनुदिनसञ्जातमन्ददेहायाः ।
रोषमपि हन्त तस्या गुणमिति नावैषि देव ! तर्केण ॥

अत्र प्रेमविषयं प्रति उक्तिः ।

अहं तन्मय एवास्मि मन्मयी सा न कर्हिचित् ।
नाथ ! सत्यं भवान्कृष्णः सा तु गौरीति गीयते ॥

प्रेमाधारस्य शपथो यथा—

त्वत्कर्णे मणिकर्णिका शिरसि ते वेणीयमुन्नीयते
विश्रान्ति स्तनमण्डले तव पुनः काञ्ची नितम्बे स्थिता ।
त्वं गोदा मम नर्मदासि दयिते ! शोणस्तवास्तेऽधर-
स्तीर्थश्रेणिमयीं स्पृशामि भवतीं यद्यन्यशङ्का मयि ॥

यथा वा—

स साधुस्त्वं खलासीति जानाम्यहमुदारधीः ।
इत्युक्त्वा हृदयं स्वीयं पस्पर्श सहसा सखी ॥

वस्त्वर्पणं यथा—

इन्दुं समीहमानाय तं विधाय सुताय सा ।
नन्दस्य रमणी प्रादात्तदाकारकहीरकम् ॥ इति ।
अपि सम्भृतसम्भारा दशापि हरिणा दिशः ।
दृशा ददृशिरे शून्या राधां मानवतीमनु ॥
करोति सहसा राधा रोषबाधासमीहया ।
आकृष्य तत्सखीहस्ताद्दाम दामोदरः स्वयम् ॥
इत्यादौ तु दैन्यसेवादेराविष्करणमिति दिक् ।

छलितप्रेम यथा—

प्रेमनिधिं घटयित्वा बालां तल्लोचने च तच्चिह्नम् ।
सीदति तन्मात्रधनो लोचनचिह्नान्यथाभावे ॥

अत्र नायको नायिकां स्वविषयकप्रेमनिधिं सम्पाद्य तत्कालीनलक्षणयुक्ते नेत्रे च चिह्नं विधाय तल्लोचनवैलक्षण्यरूपान्यथाभावं पश्यन् खिद्यतीत्यर्थः । तथा च तल्लोचनचिह्नान्यथाभावरूपप्रेमकलहजनितखेदेन द्रुतं चित्तं तादृशनायिकाविषयकं छलितं प्रेम भवतीत्यर्थः ।

चिन्तया यद्द्रुतं चित्तमुत्क्रान्तिसमयोत्थया ।
तत्प्रेमाकृति विज्ञेयं चलितं तद्भवान्तरे ॥ ६२ ॥

चिन्तयेति । उत्क्रान्तिर्मरणम् । यच्चित्तं प्रेमाकृति तच्चलितं विज्ञेयमिति सम्बन्धः । भवान्तरे उत्पत्तिमारभ्य वासनारूपेण स्थितं चलितं प्रेमेत्यर्थः ।

चलितोदाहृतिर्यथा—

उदितैव चकोरकामिनी कतिधा नेन्दुमवाप्य हृष्यति ।
गतजन्मजकारणे जना विवदन्ते कुधियो न पण्डिताः ॥

अत्रायं वृत्तान्तः कामिनीवृत्तान्तात्मना स्थितः । गतजन्मजं कारणं=पूर्वजन्मनि प्रेम ।

सन्त्यक्तभूमितनयो हि पुरैव रामो
मन्ये न मद्विमुखतामपि हन्त यातः ।
किं वा करिष्यति हठीति विचिन्तनेन
देहं जहौ न स पुनः प्रणयानुबन्धम् ॥

अत्रान्यागमननिरोधाय श्रीरामेण द्वारि स्थापितस्य लक्ष्मणस्य स्वस्वान्तं प्रतीयमुक्तिः । अत्र चलितप्रेम्णां हेतुभूतं प्रेम कलिते दर्शितम् । "अन्ते मतिः सा गतिः" इति न्यायात् ।

उक्तप्रेम्णोऽस्य वैचित्र्यमाह—

एकदानेकविषयमपि स्याच्चलितादिकम् ।
परस्परेर्ष्यारहितं कान्तानामेककान्तगम् ॥ ६३ ॥

एकदेति । अपिनैकविषयम् । छलितं तु एकदैकविषयमेवेति प्रागेवावेदितम् । एतच्च नीचगतप्रेमाभिप्रायेण । ईशगतस्य स्नेहस्य मायावृत्तिरूपस्यैकदाप्यनेकविषयत्वोपगमात । अतद्गुणबहुव्रीहिणा चलितादावित्यर्थः । छलितस्य प्रकृतानुपयोगात् । चलितादावुन्मादे वैलक्षण्यान्तरमप्याह—परस्परेति।एककान्तगम्=एककान्तविषयमपीत्यर्थः । हन्त कथमीशानुरागिणीषु गोपीषु क्वचित् परस्परेर्ष्याकथनमुपपद्यत इति चेदुपपद्यत एव ईर्ष्यामानाद्यभिप्रायमात्रेण । अत एव-

हरिनीताङ्गनारत्नचरणाङ्कितमेदिनीम् ।
दृष्ट्वा नमन्ति चुम्बन्ति लुठन्त्यन्या हरिप्रियाः ॥

इत्यादि सङ्गच्छते । जीवरूपो दक्षिणनायकोऽपि चलिताद्यारूढानेकनायिकाविषयप्रेमभागेव । "अन्येर्ष्यानाकुलकामिनीकुलप्रेमशाली दक्षिण" इति हरिदासेन दक्षिणलक्षणमीदृशाभिप्रायेणोक्तम् । एतेनानेकनायकविषयकानुराग एकनायिकानिष्ठो रागाभास इवानेकनायिकाविषयानुराग एकनायकनिष्ठोऽपि कथं नानुरागाभास इति शङ्का परास्ता । अनुकूलस्तु चलितादौ चलितान्ते च प्रेम्णि, धृष्टशठौ तु हार्दमात्राङ्किताविधमाविति तन्त्रामृत एवातिसुव्यक्तमिति दिक् ।

चलितस्यावस्थामाह—

मन्दाक्षोपरमस्यात्र पाण्डुलेख उदाहृतः ॥ ६४ ॥

मन्देति । अत्र चलितोन्मादावित्यर्थः । छलित इव तथा न मन्दाक्षप्रसरः ।

ननु भगवत्कलितावस्थस्य भवान्तराभावात्कथं चलितं तत्राह-

भगवत्कलितावस्थाशालिनोऽप्येष सम्भवी ।
सन्तृप्त एव संसारविध्वंसननिदानता ॥ ६५ ॥

भगवदिति । एतच्च व्यक्तमग्रे निरूपयिष्यामः ।

ननु भवान्तरे पूर्वविषयस्याभावात्कथं निरालम्बनः प्रेमा स्यात्तत्राह—

प्राचीनविषयालाभतत्समानगुणाश्रये ।
पतत्रीव निजे भक्ष्ये तत्पतत्यन्यवस्तुनि ॥ ६६ ॥

प्राचीनेति ।

अत्र कश्चिद्विशेषः प्राचीनैरुक्तः सोऽप्यभिधीयते ।
तत्त्वोपदेशग्रहणक्षमः स्याच्चलितादिभाक् ।
आधिक्याच्चित्तसंशुद्धेर्न तथा कलितादिगम् ॥इति॥६७॥

चित्तशुद्धेराधिक्याच्चलितादिप्रेमभागिन्युपदिष्टं तत्त्वं यथा सुस्थिरं तथा न हार्द्दादिकलितान्तप्रेमभागिनीत्यर्थः ।

तत्त्वोपदेशो यथा—

जनिः शरपरित्यागो मरणं लक्ष्यवेधनम् ।
अवस्थितिर्मुक्तशरप्रयाणमिति भाव्यताम् ॥

अत्र रूपकात् जनिर्मरणार्थैव नत्ववस्थानार्थेति लभ्यते। अत एव जनिरवस्थानार्थेति मन्यमाना लोकाः प्रचुरतरशोकाकुला एव जगति लक्ष्यन्तेतमाम् ।

यथा वा—

देयः पाशोदितो दायः सन्नसन्नपि संविदा ।
हर्षखेदौ विधेयौ यद्भाव्यर्थस्तमसा वृतः ॥

एषा च पाशक्रीडारतं प्रत्युक्तिः । पाशोदितो न त्वदुदितो येन त्वमपराधी भवेरिति भावः । हर्षहेतुर्दुःखहेतुर्वा दायस्त्वया देय एव । परं त्वेष विशेषः-संविदेति । न तु तादृशहर्षेण तथाविधखेदेन वाऽन्यथा देय इति भावः । उपदेशान्तरमप्याह-हर्षखेदाविति । सति हेतावनिवारणीयोदयावपि हर्षखेदावाच्छाद्यावेव । यत्=यस्माद्धेतोर्भाव्यर्थः पराजयलक्षणो जयलक्षणो वा पूर्वमज्ञात एव । हर्षस्य

खेदस्य वा व्यक्तीकरणे भाविनि पराजये जये वा जनोपहासो भविष्यतीति भावः। इदमत्राभिहितं भवति। संसरता नरेण "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्" इत्यनुसन्धानबलात्कर्मप्रापिते शुभाशुभे भोक्तव्ये एव। शेषं समानम्। अयं चोपदेशः प्रवृत्तिपथप्रवृत्तनीत्युपदेशं बाधते।

स यथा—

भूतमष्टनृपे भव्यं पाशके भावि वा यथा।
ज्ञेयं द्विराजके धीरैः संसृतौ त्रितयं तथा॥

अष्टनृपाख्यक्रीडायामतीतं, पाशविहारे वर्त्तमानं, द्विराजके बुद्धिबले भावि वा यथा ज्ञेयं भवति तद्वत्संसारे त्रयमेतज्ज्ञेयमित्यर्थः। तथाचायं संसारो विहारत्रयात्मक इति भावः। इतोऽप्यधिकं पुनराकरादावाकलनीयमिति दिक्।

इदानीं पूर्वमुक्तस्य यत्तस्य चलितदशायां प्रफुल्लितचित्तस्य प्रेम्णि क्रान्तनाम्नीमवस्थां दर्शयति—

अनुक्षणं नयनयोर्मुद्रणेनेह कर्मणा।
यत्प्रेम व्यक्ततां याति क्रान्तं तदभिधीयते॥ ६८॥

अनुक्षणमिति। अनुक्षणमित्यस्य मुद्रणेनेत्यनेन सम्बन्धः। पूर्वमुक्तस्य कपटप्रश्नेन व्यक्तता। इह तु मन्दाक्षोपरमरूपावस्थस्य चलितस्य नयनमुद्रणेनेति।

क्रान्तावस्थामाह—

व्यवहारेषु वैमुख्यं प्रारब्धेष्वभिमानिता।

व्यहारेष्विति। ननु यत्तमेव भवान्तरे नामान्तरेण निर्दिष्टं न तु जात्यन्तराक्रान्तमित्यत्राह—

भवान्तरगतादेष विशेषः क्रान्तसंज्ञके॥ ६९॥

भवान्तरेति। क्रान्तभवापेक्षया यत्पूर्वभवान्तरं तद्गताद्यत्तात् एष विशेषः व्यवहारे वैमुख्यमित्यादिनाऽभिहितः। तथा च विलक्षणावस्थारूपकार्यानुरोधेन कारणमपि विलक्षणमङ्गीकरणीयमित्यर्थः। न च यत्ते व्यवहारवैमुख्यादि।

नन्वस्यामवस्थायां प्रेमविषयगोचरस्तवनवन्दनादिनिखिलव्यवहारदर्शनेन व्यवहारेषु वैमुख्यमित्याद्यभिधानमसङ्गतं तत्राह—

इष्टहर्षफले हेतौ न ह्येषा व्यवहारता॥ ७०॥

इष्टेति । इष्टः प्रेमविषयः तदीयो हर्ष एव फलं यस्य स तथाविधस्तस्मिन् हेतौ कारणे व्यवहाररूपेऽपि व्यवहारता न ज्ञेया। तथा च व्यवहारपदेन प्रेमविषयातिरिक्तगोचरविषयव्यवहार एव विवक्षित इति भावः। यद्वा अशनपिपासादिव्यवहारो यथा व्यवहारत्वेन न विवक्षितस्तथा प्रेमविषयव्यवहारोऽपि। अस्यापि शरीरस्थितिप्रयोजकत्वाविशेषादिति। गुणाकरस्तु नयनमुद्रणस्यातापकतया क्रान्तं न प्रेमान्तरं किन्तु चलितस्यैव कापि व्यक्ता दशेत्याह। वस्तुतस्तु उक्तरूपचलिताद्विषयवासनातिशयलक्षणादनुक्षणं विषयस्मृतिर्जायते। तदासादितविषयसमागमरसस्तत्प्रतिभासमात्रं वात्र चित्तस्य तापकः। नयनमुद्रणा त्ववश्यतुकर्तव्यरूपा न तु तापभावस्था चलितप्रेमाभिव्यक्तीकरणप्रगल्भेति मन्तव्यम्। क्रान्तमुदाहरति—

अन्तःस्थितोऽपि कमलापतिरेष याया-
त्प्रायोऽध्वना नयनयोरमुनेति मत्वा।
राधा निमीलयति ते सहसानुराग-
निर्मग्नमानससमस्तवधूवतंसः॥

यत्तोत्तरभाविललितदलितमिलितकलितेभ्यश्चलितोत्तरभाविनामेतेषां नातिचारुतेति नात्र पुनरमी प्रेमाण उदाहृताः।

प्राचीनच्छलितादस्य छलितस्य विशेषोऽस्तीत्येतत्पृथग्दर्शयति—

एकयापि लघीयस्या मानसूचकचेष्टया।
यच्चेतो द्रुततां याति विक्रान्तं तन्निगद्यते॥ ७१॥

एकयेति। एकयापि=अपिना छलित इव न नानारूपया। तत्रापि लघीयस्या=अचिरसमयस्थायित्वेन नातिव्यक्तया, मानसूचकचेष्टया प्रेमविषयगतमानाभिव्यञ्जकचेष्टया। मधुरयेति शेषः। नतु च्छलित इव बह्वनुनयनिवर्त्यया। तथाचेदृशक्रियाद्रवीभूतं चित्तं विक्रान्तमभिधीयत इत्यर्थः। अत्र च चेतसः प्रेमविषयगतमानाभिव्यञ्जकाक्रियालेशस्याप्यसहनमुद्वेगापरपर्यायं तापकमवगन्तव्यम्। मानाभिव्यञ्जकचेष्टा साक्षात्कृतैव न तापिका किन्तु श्रुतापीत्याह गुणाकरः।

विक्रान्तोदाहरणमाह—

अयथापूर्वजातेन प्रियस्यागमनेन सा।
दृष्टेन वेपथुमती बभूव सहसा प्रिया॥ ७२॥

अयथेति । अत्र प्रियविलक्षणागमनं प्रियगतगूढमानाभिव्यञ्जकं प्रियायाश्चेतसस्तापकं बोध्यम् । यदाहुः प्राञ्चः-"पूर्वोक्तं कान्तमेव विलक्षणावस्थोपेतं सङ्क्रान्तम्" इति ।

तदिदानीं प्रसङ्गतः सङ्क्रान्तं प्रेम निरूपयति—

अनुक्षणपरीतापद्रुताच्चित्तादथापरः ॥
सङ्क्रान्तनामा प्रेमायं जन्मसाफल्यबीजभूः ॥ ७३ ॥

अनुक्षणेति । एनां च कारिकामाश्रित्य तन्त्रामृतकारेण सङ्क्रान्तनामकं प्रेम चतुर्द्धा निरूपितम् । तद्यथा—यत्र प्रेमधारेण प्रेमविषये मानः पश्चात्तापपर्यवसायी तत्र तादृशानुक्षणतापेन प्रेमाधारे यश्चित्तद्रवस्तस्मात्सङ्क्रान्तम् । नच प्रेमाधारे मानवर्णनमनुचितमिति वाच्यम्, अनुतापपूर्ववर्त्तिनस्तस्य वर्णनायामनौचित्याभावात् । यथा—

यस्यानुक्षणमक्षिवीक्षणरसात्क्षान्तो नितान्तोदितो
दुर्वादः सहितोपदेशनिवहो नासेवि सर्वात्मना ।
तस्मिन्नप्यहह प्रिये विरचितो मानो मया नो दया
कस्मादित्यनुतापदीर्घततिभिस्तब्धीभवत्यङ्गना ॥

अत्र स्तब्धताऽव्यङ्ग्यो द्रवः । यद्यपि छलितप्रेम्ण्यप्यनुतापोऽस्ति तथापि स न प्रतिक्षणम् । अत एव छलितप्रेम्णि कादाचित्कादनुतापादुच्छालितनाम प्रेमान्तरमङ्गीकरोति हरिदासः । अयं च सङ्क्रान्तनामप्रेम्णः प्रथमप्रकारो दर्शितः । यत्र तु प्रेमाधरे प्रेमविषयवृत्तिमानानुतापस्य ज्ञानं कथंचिद्भूत्तत्र तादृशज्ञानरूपतापकवशात् प्रेमाधारे चित्तद्रुतिस्तयोत्पन्नं प्रेमाधारे सङ्क्रान्तनाम प्रेम । तदुदाहरणम्—

राधागतानुसन्तापाच्द्रुतादाकुलमानसः ॥
स्वयंविहितमानोऽपि तामेवानुययौ हरिः ॥ इति ।

अयं च द्वितीयः प्रकारः सङ्क्रान्तनाम्नः प्रेम्णः । द्विविधोऽप्यसौ प्रेमाधारगत एवोक्तः । यत्र तु प्रेमविषये कृतमाने पश्चात्तापः, तेन च चित्तद्रुतिः, तया प्रेमाधारविषयकं प्रेम, सङ्क्रान्तनामकं प्रेम विषयवृत्ति बोध्यम् ।

यथा—

मामेव चिन्तयति यो निखिलं विहाय
मत्पार्श्वमेव सततं परिसेवते यः ।

तस्मिन्हरौ प्रणतिशालिनि शुद्धचित्ते
मानः कथं समजनीति बभूव खिन्ना ॥ इति ।

अयं च सङ्क्रान्तप्रेम्णस्तृतीयः प्रकारो दर्शितः। यत्र तु अनुचितक्रियां विधाय पश्चात्तादृशानौचित्यप्रतिसन्धानेन तापकेन यस्मिन् चित्तद्रुतिः तया यद्विषयकं प्रेमोत्पद्यते तद्विषयकं तादृशानुचितकर्त्तरि सङ्क्रान्तनामकं प्रेम भवति ।

यथा—

प्रतिबिम्बस्य लोकेऽस्मिन् विवेकवशवर्तिता ।
त्वय्येव जीवं केनेयं बिम्बवैमुख्यभागिता ॥

अत्र बिम्बवैमुख्यभागित्वप्रतिसन्धानरूपं तापकमेव लब्धं भवति । चित्तद्रवस्तु व्यङ्ग्योऽत्र द्रष्टव्यः । एवं च प्रतिबिम्बरूपे जीवे बिम्बवैमुख्याचरणरूपानुचितक्रियाप्रतिसन्धानात् द्रुतस्य चित्तस्य सङ्क्रान्तरूपप्रेमपरिणतिर्ज्ञेया। अयं च सङ्क्रान्तप्रेम्णश्चतुर्थः प्रकारः।

यथावा—

आशयेतस्ततोऽस्माकं भ्रमतां नाजनि त्रपा ।
अपि जीवनदान्याशाहीनचातकपोतकात् ॥

अत्र भ्रमत्सु जीवनदेश्वरविषयकं प्रेमाभिव्यज्यते । एवमुचितानाचरणप्रयुक्त्यनुतापेनापि सङ्क्रान्तनामानं प्रेमाणमुरीकरोति गुणाकरः ।

यथा —

चिरं ध्याता रामा क्षणमपि न रामप्रतिकृतिः
परं पीता रामाधर इह न रामाङ्घ्रिसलिलम् ।
नता रुष्टा रामा यदरचि न रामाय विनति-
र्गतं मे जन्माग्र्यं न दशरथजन्मा परिचितः ॥

एतमेव सङ्क्रान्तप्रेमप्रकारं पुरुषार्थसाधनत्वेन विशदयति—जन्मसाफल्यबीजभूरिति । एतत्प्रेमावाप्त्यैव जन्म सफलमित्यर्थः । नच विक्रान्तसङ्क्रान्तयोः प्रेमविभागे गणनाया अदर्शनादुक्तं यत्तमितिपद्ये न्यूनतापत्तिरिति वाच्यम्, केनचित्प्रकारविशेषेण पृथगभिहितयोरप्येतयोः छलिताच्छलिताभ्यां तथानतिरेकात् । नचैवं क्रान्तस्यापि यत्तेऽन्तर्भावोऽस्त्विति वाच्यम् । स्वतन्त्रेच्छस्याचार्यस्य पर्यनु·

योगेऽस्मदादेरसामर्थ्यात् ।

जन्मसाफल्यबीजभूरित्युक्तं विशदयति—

एतस्यैव परीपाकदशां प्राहुर्निवेदनम् ।....

एतस्यैवेति । एतस्यैव=चतुर्थप्रकाररूपस्य सङ्क्रान्तप्रेम्णः । निवेदनपदार्थं दर्शयति—एतदिति । एतद्देहादिसकलं तस्येति प्रतिपत्तुः तत् । अस्यार्थः । मदितरजनैर्मदीयतयोपलभ्यमानं देहादिवस्तुजातं मत्प्रेमविषयस्यैवेति या प्रतिपत्तिः सैव निवेदनपदेनोच्यत इत्यर्थः । तथाचानाहार्यमप्रामाण्यज्ञानानास्कन्दितं तादृशं ज्ञानं निवेदनमिति फलितम् ।

निवेदनोत्तरभाविनमर्थं विशदयति—

जाते निवेदने पश्चान्मानस्यावसरः कुतः ॥ ७४ ॥

जाते इति । तथा च सञ्जातसङ्क्रान्तप्रेमपरिपाकदशारूपनिवेदनशालिनां चित्तं नाट्यरूपेणापि मानेन न युक्तमित्युक्तं भवति ।

यथा—

मदीयचरणाम्बुजप्रणतिरस्य नैसर्गिको
गुणो रसिकनायकव्रजविलासवारांनिधेः ।
तदर्पिततनौ मयि स्थितिपदं न धत्ते क्वचि-
न्मृषापि बत मानिताकणलवोऽपि तद्गोचरः ॥

अत्र प्रणतं श्रीकृष्णं दृष्ट्वा तस्मिन्मानं किमिति करोषीति तिरस्कुर्वन्तीं सखीं प्रति नायिकोक्तिः ।

यथा वा—

दूरस्थितविशिष्टेष्टविसृष्टधनवत्स्थिता ।
सरक्षणफला तस्या न सुखाय निजा तनुः ॥

अपरं वा—

अस्मिन्कलेवरे तावत्तद्दयामनु मे दया ।
नैतत्स्वं बत चेत्तस्या ममास्थायाः कथं पदम् ॥ इति ।

अत्र श्लोकद्वये निवेदनं व्यक्त्या प्रतीयते । हरिदासस्तु सङ्क्रान्तप्रेमपरिपाकरूपं निवेदनम् ।

तस्यैवाहं ममैवासाविति वृत्तिद्वयं क्रमात् ।
निवेदनमिति ज्ञेयं तत्रात्य तु सपूर्वकम् ॥

इति श्लोकेन वृत्तिद्वयात्मकं निरूपयातिस्म। उदाहरति स्मच—

सत्यपि भेदापगमे नाथ! तवाहं न मामकीनस्त्वम्।
सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥
हस्तमुत्क्षिप्य यातोऽसि बलात्कृष्ण! किमद्भुतम्।
हृदयाद्यदि निर्यासि पौरुषं गणयामि ते॥

क्वचिदपि पलायितोऽपि त्वं मदीय एवासीति भावः।

यथा वा—

मुग्धे! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि।
सख्यैवं प्रतिबोधिना प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥

अयं मदीय एव किमत्र मानेनेति भावः।

इत्यलमधिकेन।

अधुना विहृतं प्रेम निरूपयति-

एतच्च चलितं नाम्ना विहृतं कथितं बुधैः।

एतदिति। चिन्तया यत् द्रुतं चित्तमित्युक्तरीत्या चतुर्थप्रकाररूपं सङ्क्रान्तं प्रेम भवान्तरे चलितं सद्विहृतनामकं प्रेम भवतीत्यर्थः।

पूर्वचलितादस्य विहृतस्य भेदं वक्तुमवस्थामाह—

सर्वदात्र द्रवावस्था काठिन्यं स्वल्पकालभाक्॥ ७५॥
तापकस्मृतिरप्यत्र विहृते तापिका मता।
शून्यदृष्टेरिहारम्भो ह्यपि प्रत्यक्षवस्तुनि॥ ७६॥

सर्वदेति। सर्वदेत्युत्सर्गः। चेतस इत्यनुषङ्गः। तापकानां चित्तद्रवहेतुभूतानां प्रेमविषयवृत्तिलीलानां स्मृतिः=स्मरणम्। अपिना प्रेमविषयस्मरणमपि। अत्र=विहृते, तापकं भवेत्।

यथा—

अनुक्षणं निपतति प्रायोऽध्वनि समेऽपि सा।
तमालतरुमुद्दामा त्वद्भ्रमात्परिचुम्बति॥

अत्र पतनचुम्बनहेतुभ्रमस्य कारणं विहृतं प्रेम बोध्यम्।

अत्र विशेषमाह—

निर्वेदनपरीपाकोऽप्यत्रैव समुदीर्यते।

निवेदनेति । अत्रैव=विहृत एव ।

अस्मात्पाकान्निजे देहेऽप्यौदासीन्यं समुद्भवेत् ॥ ७७ ॥

अस्मादिति । विक्रीतस्य गवादेर्योगक्षमयोरिव प्रेमविषयनिवेदितस्य निजदेहस्य योगक्षेमयोरचिन्तनमौदासीन्यपदस्यार्थः । एतदेव श्रीमद्भगवता दर्शितम्—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति ।

इदानीं गलितं निरूपयति—

इतोऽपि चलितं प्रेम ज्ञेयं तृसद्गलिताभिधम् ।

इतोऽपीति । अस्माद्भवान्तरे विहृतं चलितं सद्गलिताभिधेयं प्रेम भवतीत्यर्थः ।

अस्यावस्थामाह—

वियत्कुसुमसङ्काशमिह काठिन्यमुच्यते ॥ ७८ ॥

वियदिति । इह=गलिते । लेशतोऽपि काठिन्यं नास्तीत्यर्थः ।

गलितं प्रेम यथा—

कालियस्य सखा भ्राता प्रायस्त्वत्प्रेमगूढपात् ।
येन दृष्टा त्वदीयेति सा मनागपि नेहते ॥

एनां पूर्णजडावस्थामाहुः प्रेमपथानुगाः ।

इह तृप्तः समारम्भो जीविकापरवर्त्मना ॥ ७९ ॥

एनामिति । एनां=गलितावस्थामित्यर्थः । जडां=व्यवहाराप्रतिसन्धानरूपामित्यर्थः ।

इदानीं सन्तृप्तं प्रेम निरूपयति—

इतोऽपि चलितं प्रेम सन्तृप्तमिति गीयते ।

इतोऽपीति । इह तन्त्रामृतकारधृतं विष्णुरहस्यस्थश्लोकं प्रमाणत्वेन दर्शयति—

अनेकजन्मसंसिद्धसन्तृप्तहृदयः सुधीः ।

जीवन्मुक्तदशोपेतो नास्य कर्त्तव्यमिष्यते ॥ इति ।

अनेकेति । अत्र बहूनि प्रेममूलवचनानि तन्त्रामृतग्रन्थात् ज्ञेयानि । विस्तरभयान्न लिख्यन्ते ।

तस्य परमपुरुषार्थसाधनत्वं विशदयितुमाह—

गलितान्तेषु विषयो विषयः परिकीर्त्तितः ।
इहानन्दात्मकं ब्रह्म विषयो वर्णितो बुधैः ॥ ८० ॥

गलितान्तेष्विति । विषयो विषय इति । विषयो ब्रह्मणि अध्यस्तो द्विधा भूतवर्गो मायापरिणामस्तदवच्छिन्नं ब्रह्म वा ।

अन्यविषयप्रेम्णोऽन्यत्रानुवृत्तौ दृष्टान्तमाह—

शिखात्मना स्थितो दीपः संलग्ने वर्त्तिकान्तरे ।
यथा याति तथा प्रेम विषयाच्चित्स्वरूपके ॥ ८१ ॥

शिखात्मनेति । शिखा अन्तिमदशायामित्यर्थः ।
संलग्न इति—पूर्ववर्त्तिकायां न तिष्ठतीत्यर्थः ।

युक्तिं चोपपादयति—

आनन्द एव प्राचीनैः प्रेमभिः परिशीलितः ॥ ८२ ॥

आनन्दएवेति । आनन्दो ब्रह्मैव ।

अवच्छिन्नविषयेण कथं निरवच्छिन्नं विषयीकृतं तत्राह—

अवच्छिन्नानवच्छिन्ने भिद्येते गगने न हि ।
स एव चानवच्छिन्नो भूमानन्द इतीर्यते ॥ ८३ ॥

अवच्छिन्नानवच्छिन्ने इति । ननु कामिन्यादिशरीरमेव प्रेमविषयोऽस्त्वत आह—

कामिन्यादिशरीरं न केवलं प्रेमगोचरः ॥

कामिन्यादीति । युक्तिमाह—

कामिना क्रियते कर्म तन्नाशे पारलौकिकम् ॥ ८४ ॥

नहि शरीरमात्रविषयकप्रेमसत्त्वे पारलौकिककर्मकरणं सम्भवति अतस्तदवच्छिन्नात्मैव विदुषामिव पामराणामपि प्रेमविषय इति सिद्धम् । इयान् परं विशेषो विद्वांस इव पामरा नात्मानं देहात्पृथग्विवेचयितुमीशते ।

अवच्छिन्नविषयत्यागे बीजमाह—

विषयस्य परित्यागे द्रवकाष्ठैव कारणम् ।

विषयेति । एवकारान्न विषयप्रीतिः । अत एव हरिदासोऽपि समुदितशबलमायावच्छिन्नब्रह्मविषयानुरागासु गोपीषु सन्तृप्तप्रेमाणमपि मन्यमानो द्रवतारतम्याद्द्विविधमपि समाधिमाह ।

एनमर्थमनुभवेन विशदयति—

अपि प्रमादगलिताच्चित्ताल्लोके न दृश्यते ॥ ८५ ॥

विषयव्यवहारोऽत्र किं वाच्यं मग्नचेतसः ।

अपीति । चिरकालं मनसि स्थितोऽपि विषयः कदाचित्प्रमादकृतद्रुतिवशान्न स्मर्यते । लोकोऽपि वक्ति किञ्चिद्वस्तु हृदय एव तिष्ठति परन्तु न स्मर्यते इति । एवं च प्रमादद्रुतचित्तस्यापि यत्र चिरपरिचितवस्तुविस्मारकत्वं स्वभावो दृष्टस्तत्र किं वाच्यमानन्दौघमग्नचित्तस्य विषयविस्मारकत्वमिति भावः ।

यदुक्तम्, "आनन्द एव प्राचीनैः प्रेमभिः परिशीलितः।" इति । तत्परिशीलनमनेकविजातीयवृत्तिभिरिति विशदयति—

क्रान्तान्तप्रेमजानन्देऽवस्था परिचयात्मिका ॥ ८६ ॥

विहृतस्य भवेद्धार्दे सौहार्दगलितात्मना ।

प्रेमात्मिका तु सन्तृप्ते चिदानन्दैकचुम्बिनी ॥ ८७ ॥

क्रान्तान्तेति । उप्तमारभ्य क्रान्तपर्यन्तेत्यर्थः ।

नन्वानन्दमात्रविषयकं प्रेम जायत इति कुत्र निर्दिष्टं तत्राह—

एतदाह यदूत्तंसो गोपीभ्यस्तद्धितेच्छया ॥ ८८ ॥

एतत्=सन्तृप्तरूपं प्रेम ।

कृष्णकल्पद्रुमग्रन्थधृतं विष्णुरहस्यस्थं श्लोकमत्र दर्शयति-

कुरुध्वं प्रेम महितं विषयेऽद्य मदात्मनि ।

आनन्दरूपे यत्रास्ते न वियोगो मनागपि ॥

कुरुध्वमिति ।

तथा—

वास्तवे मामके रूपे प्रेमाणं विनिवेशय ।

सोपान एव किं वासः प्रासादमधिरोहतः ॥

नन्ववच्छिन्नानवच्छिन्नानन्दपरिभाषायास्तार्किकादिनयेऽलीकतया

९

तन्नये सन्तृप्तस्य विषयः कः स्यादिति शङ्कायामाह—

मतान्तरेऽवतारी तु सन्तृप्तविषयो मतः ।
गलितान्तस्य विषयोऽवतारः परिवर्ण्यते ॥ ८९ ॥
दलितादौ तु सम्प्रज्ञात एव स्यात्परो न हि ।
असौ वृत्त्यात्मको वृत्तिशून्यान्तःकरणोऽपरः ॥ ९० ॥

मतान्तरे इति दलितादाविति । संयोगवियोगावस्थायामिति भावः । असौ=सम्प्रज्ञातः । अपरः=असम्प्रज्ञातः ।

अस्य निष्कृष्टं लक्षणमाह—

आनन्दाकारता वृत्तिं विना स्वाभाविकी हृदः ।
असम्प्रज्ञातनामायं व्यक्तः पातञ्जलोक्तिषु ॥ ९१ ॥

उत्पद्यमानो घट आकाशावच्छिन्न इव उत्पद्यमानमन्तःकरणं वृत्तिं विनानन्दाकारमेवोत्पन्नं न तु विषयाकारम् । विषयाकारता तु तस्य वृत्त्येतिदिक् ।

सन्तृप्तं यथा—

चरितादुपलक्ष्य सज्जनं प्रणयस्तत्र विधीयते यथा ।
परिचिन्तनयापि राधिके ! परमानन्दघनं तथाऽकृथाः ॥

अत्रोद्धवद्वारा श्रीकृष्णस्य राधिकां प्रत्युक्तिः । यथोपलक्षितेन बुध्यमानः सुजनो न चरितं नापि चरितावच्छिन्नस्तथा मल्लक्षणोपलक्षणेन बुध्यमानः परमानन्दघनः नाहं नापि मदवच्छिन्नः किन्तु केवलः शुद्धोऽतस्तत्रैव प्रेम कार्यमित्याशयः ।

एतदेव फलीभूतं फलभक्तिरितीर्यते ।

एतदेवेति । यत् ज्ञानाङ्गतयोच्यमानं सन्तृप्तरूपं प्रेम एतज्जातीयमेव तत्त्वज्ञानोत्तरभाविफलीभूतं प्रेमोच्यते ।

यथा—

यदवधि हृदयं मे त्वत्स्वरूपैकमग्नं
तदवधि तव मत्या मामकीनं कुटुम्बम् ।
यदपि मिलितमेतत्कामभोगादिजातं
तदपि मधुरमेव प्रेमपूर्तेर्हिताय ॥

यथा चास्य फलरूपता तथाग्रे निरूपयिष्यामः ।

नन्विच्छायाः कथं स्वतः पुमर्थता तत्राह--

अलब्धलब्धेरिच्छा तु पुमर्थो न यदि स्वतः ॥ ९२ ॥

लब्धलिप्सा पुमर्थः स्याल्लब्धव्या गुरवोऽत्र नः ।

अलब्धेति । अत्र=अस्मिन्विषये ।

एतच्च परमं प्रेम मुक्तेरान्तरकारणम् ॥ ९३ ॥

एतदिति । एतत्=फलीभूतं सन्तृप्तरूपं प्रेमेत्यर्थः ।

ननु "तमेवैकं जानथ" "तमेव विदित्वातिमृत्युमेति "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति" इत्यादिश्रुतिस्मृतिभ्यां ज्ञानस्यैव मुक्त्यङ्गत्वं प्रतीयते । तत्राह--

बोधो हेतुर्दुःखमुक्तौ प्रेमद्वारा भविष्यति ।

बोध इति । प्रेमद्वारा=फलीभूतसन्तृप्तरूपप्रेमद्वारा । श्रुतिगतैवकारस्तु ज्ञानातिरिक्तस्य ज्ञानविरोधिनः कर्मणो हेतुतामपाकरोति । प्रेम तु ज्ञानद्वारं द्वारिगतहेतुतामेव समर्थयते ।

ननु प्रेम कथं ज्ञानस्य द्वारं तत्राह--

अबुद्धार्थो नहि प्रेमा ।

अबुद्धार्थ इति । तथा च बुद्धार्थविषयकप्रेमाऽर्थतत्त्वसाक्षात्कारोत्तरं केन वारणीयमिति भावः । ननु ज्ञानं न नियमेन स्वविषये प्रेमोत्पादकं घटज्ञानात्तदुत्पत्त्यापत्तेरिति चेत्, न । वस्तुविशेषज्ञानस्य प्रेमोत्पादकत्वात् ।

ननु प्रेम्णो मुक्तिसाधनत्वं क्व श्रुतं तत्राह--

हेतुर्मुक्तावसौ श्रुतः ॥ ९४ ॥

हेतुरिति । असौ=प्रेमा । "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । भक्तिं मयि परां कृत्वा" इत्यादिवचनेभ्यः ।

ननु शुद्धब्रह्मविषयकं प्रेम मुक्तिहेतुः किं वा शबलसगुणब्रह्मविषयम् । नाद्यः । दुःखहानिहेत्वज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वात् । नहि शुक्तिविषयं ज्ञानमज्ञाननिवृत्तौ शुक्तिविषयं प्रेम द्वारत्वेनापेक्षते । न द्वितीयः । शबलब्रह्मविषयप्रेम्णश्चित्तशुद्धावुपयोगेन मुक्तावहेतुत्वात् ।

शबलब्रह्मविषयकप्रेमणस्त्वन्नये सन्तृप्तपदवाच्यत्वाभावाच्चेत्यत आह---

अस्तु वा परमप्रेमा निदिध्यासनवर्त्मना।
ज्ञानाङ्गं भक्तिरप्येष पदार्थ इति सुस्थिरम् ॥ ९५ ॥

अस्तु वेति। "या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ त्वामनुस्मरतः सा मे" तथैवेति भावः। "हृदयान्मापसर्पतु" इति वचनेन विषयगतप्रेम्णोऽपरमत्वोक्तेः। निदिध्यासनेति। शुद्धविषयकनिदिध्यासनेत्यर्थः। वर्त्म=द्वारम्। तथा च शुद्धविषयं सन्तृप्ताख्यं प्रेम शुद्धविषयनिदिध्यासनद्वारा मुक्तिसाधनं शुद्धविषयज्ञानाङ्गमित्यर्थः। "भक्त्या मामभिजानाति" इत्यादिवचनं परमप्रेम्णो ज्ञानाङ्गत्वे प्रमाणम्। ननु तत्र भक्तिशब्देन निर्देशात्कथं प्रेम्णो ज्ञानाङ्गत्वं सिद्धं तत्राह-भक्तिरपीति।

ननु सन्तृप्तस्य परमप्रेम्णः शुद्धचिन्मात्रविषयकत्वेन शबलब्रह्मविषयकत्वाभावात्तद्विषयकप्रेम्णः परत्वानापत्तिरत आह—

शबलब्रह्मविषयः प्रेमा ज्ञेयः परापरः।

शबलेति। चिन्मात्रविषयकप्रेमापेक्षयाऽपरोऽपि कामिन्यादिविषयप्रेमापेक्षया परः।

ननु यस्त्वया सन्तृप्तरूपः प्रेमाभिहितः सोऽपि न परः, ज्ञानाङ्गत्वेन फलमात्ररूपत्वाभावादत आह--

ज्ञानाङ्गमपि यः प्रेमा सोऽपि वर्त्मास्य सेवते ॥ ९६ ॥

ज्ञानाङ्गमिति। यः=शुद्धविषयः। अस्य=शबलविषयप्रेम्णः। सेवते=अनुकरोतीत्यर्थः। तथाचायमपि परापर इत्यर्थः।

अज्ञाननाशकालोत्थप्रेमदृष्ट्या परेतरः।
शबलब्रह्मविषयप्रेमदृष्ट्या परोऽप्यसौ ॥ ९७ ॥

अज्ञानेति। तत्त्वसाक्षात्कारेण अज्ञाननाशोत्पत्तिद्वितीयक्षणे स्वविषये प्रेमा जन्यते। यत्र परोक्षज्ञानस्य प्रेमोत्पादकता तत्र किमु वाच्यमपरोक्षसाक्षात्कारस्य तदुत्पादकतायाम्। एवञ्च तादृशप्रेमापेक्षया शुद्धविषयोऽपि प्रेमा परोक्षज्ञानजन्यो ज्ञानाङ्गत्वादपरः। शबलब्रह्मविषयप्रेमापेक्षया तत्फलरूपत्वेन परः।

तत्त्वज्ञानसमुत्पन्नः पर एव फलात्मकः ॥ ९८ ॥

परत्वं विशदयति--

सुखैकचुम्बितारूपं स्वास्थ्यं प्रेम्णा यतोऽजनि ॥ ९८ ॥

विशिष्टसुखचुम्बित्वमस्वास्थ्यं तदभाग्यतः ॥ ९९ ॥

सुखेति । यतः कारणात् अजनि अतस्तत्परमिति वाक्यशेषः । तदभाग्यत इति पदद्वयम् । तात्पर्यमुन्नीयते । यद्यपि तत्त्वज्ञानाङ्गस्य शुद्धविषयस्य सन्तृप्तप्रेम्णो विशिष्टसुखचुम्बित्वरूपमस्वास्थ्यं नास्ति तथापि परोक्षज्ञानजन्यत्वरूपमस्वास्थ्यमस्तीति भावः । स्वास्थ्यो-दाहृतिर्यथा—

उपासितेन प्रेम्णैव मयि कापि कृपा कृता ।
स्थानस्य प्रेम सखि ! मे स्थान एव यतः स्थितम् ॥

अस्यैव विवृतिर्यथा--

तातश्चापभृतामवाप्यचरणश्चिन्तामणिर्मातुलः
साक्षात्त्वं च धनुर्द्धरः सुत ! कथं शेषेऽत्र भूमण्डले ।
ज्ञातं त्वन्मरणात्परोऽस्ति कृतिमान्देवः स्वतन्त्रः प्रभु-
र्माया कल्पितमेव याति न तु सत्तच्चोत्तरेणापि सत् ॥

इत्यभिमन्यु.......... ।

स्वास्थ्ये विज्ञेयरूपाणामपरप्रेमजन्मनाम् ।
तदीयोऽहं मदीयस्त्वमिति भेदधियां लयः ॥ १०० ॥

स्वास्थ्य इति । ननु तत्त्वज्ञानात्पूर्वभाविनः सन्तृप्तप्रेम्णः साध-नरूपत्वं तदुत्तरभाविनस्तस्य फलत्वमिति को नियमस्तत्राह—

स्वार्थ एव सुविश्रान्तं फलप्रेम निगद्यते ।

स्वार्थ एवेति । तथाचेतरानङ्गफलीभूतप्रेमेत्यर्थः ।

ननु जीवन्मुक्तेषु सात्त्विकभावविलोकनेन सिद्धस्तत्र प्रेमा परं तु नायं फलात्मकः सात्त्विकभावहेतुत्वादत आह—

जीवन्मुक्तेषु दृश्यन्ते सात्त्विकास्तावतापि किम् ॥ १०१ ॥
तेऽनुदेश्या न बाधन्ते फलतां प्रेमवर्तिनीम् ।

जीवन्मुक्तेष्विति । मतान्तरमाह—

गुणानुबन्धिना हेतुः साध्या गुण्यनुबन्धिनी ॥ १०२ ॥

गुणेति । गुणप्रेमप्रयुक्तं यदा गुणिनि प्रेम तदा तत्प्रेम साधन-

मित्युच्यते। यदा तु गुणप्रेमपरिपाकप्रयुक्तं गुणिन्येव प्रेम विश्रान्तं न गुणेषु तदा तत्प्रेम फलावस्थमित्युच्यते।

नन्वेतत्कस्य मतं तत्राह--

भक्तिरेषा द्विधेत्याह तन्त्रामृतकरिः स्वयम्॥ १०३॥

भक्तिरिति। एतन्नये ज्ञानात्पूर्वभाविनि सन्तृप्ते यथा न फलरूपतापत्तिस्तथा सुधीभिः परिचिन्तनीयमित्याह हरिदास इति दिक्।

ननु तथापि प्रेम्णः सुखदुःखाभावभिन्नत्वेन पुमर्थत्वं दुर्लभं तत्राह--

सुखदुःखात्ययाद्भिन्ने प्रेम्णि चेन्न पुमर्थता।
सममज्ञाननाशेऽपि सुखे सिद्धे न साध्यता॥ १०४॥

सुखेति। सुखे=चिद्रूपे। तथा च प्रेम्णोऽपुरुषार्थत्वमाशङ्कमानस्य तवापि वेदान्तिनो मते पुरुषार्थपदार्थौ दुर्लभ एव।

नन्वज्ञाननिवृत्त्युपलक्षितमानन्दस्वरूपं पुमर्थ इति चेत्तत्राह--

अवच्छेदकता तुल्या प्रेम्ण्यज्ञानविनाशवत्।

अवच्छेदकतेति।

ननु प्रेमोपलक्षितानन्दत्वेन न पुमर्थता तस्य प्रागेव सिद्धेः। अज्ञाननिवृत्तिसमयोत्पन्नप्रेमोपलक्षितानन्दत्वेन पुमर्थतोक्तौ तु लाघवादज्ञाननिवृत्त्युपलक्षितानन्दत्वेन सास्त्वत आह–

लाघवात्सा विजातीये प्रेम्ण्येव परमार्थता।

लाघवादिति। लाघवं च विजातीयत्वनिवेशापेक्षया। वैजात्यं तु प्रेमगततत्त्वज्ञानजन्यतावच्छेदकतया सिद्धमतो न गौरवम्।

नन्वज्ञाननाशोत्पत्त्यनन्तरमेव यत्र विदेहमुक्तिस्तत्र का गतिर्विजातीयप्रेम्णोऽवस्थानासम्भवात्तत्राह—

अज्ञाननाशकालोत्थप्रेमा पातेऽपि वर्ष्मणः।
तिष्ठेदेव विदेहाख्या मुक्तिरेवेति गीयते॥ १०६॥

अज्ञानेति। वर्ष्मणः=शरीरस्य। एतेन सदेहं प्रेम जीवन्मुक्तिरिति फलितम्।

ननु देहपाते प्रेम्णोऽवस्थानमसङ्गतमित्याशङ्कां मतान्तरोद्भावनेनापाकरोति।

सुखाभिवेदनं नित्यं मुक्तिभेदोऽपि यज्जगौ ।
प्रेम्णो भेदो मतादस्मात् ज्ञानात्प्रेमाधिकं यतः ॥१०७॥

सुखेति । यथा भट्टमते नित्यसुखसाक्षात्कारस्य ज्ञानविशेषरूपस्य देहपातेऽप्यवस्थानं तथास्माकमपि इच्छाविशेषरूपप्रेम्णोऽवस्थानमित्यर्थः । ननु तर्हि भट्टमतमेवादरणीयं मास्तु ते इच्छाविशेषरूपप्रेमोक्तिरित्यत आह—प्रेम्ण इति । अधिकमिति ज्ञानस्येच्छायामङ्गभूतत्वादिच्छायास्तु स्वविषयमात्रविश्रान्तत्वादिति भावः । ज्ञानजन्यफलरूपत्वादिति भावः ।

मतान्तरमाक्षिपति—

भोक्तव्यदुःखनाशोऽपि भोगात्तत्त्वधिया तु किम् ।

भोक्तव्येति । अभोक्तव्ये तु दुःखे मानाभावात्तन्नाशः सुतरामलीक इति भावः ।

नन्वात्यन्तिकत्वविशेषणायात्मतत्त्वज्ञानमपेक्षितं तत्राह—

आत्यन्तिकत्वधर्मांशो दुःखहेतोरभावतः ॥ १०८ ॥

आत्यन्तिकत्वेति । स्वसमानाधिकरणदुःखासमानकालिकत्वस्यात्यन्तिकत्वस्य दुःखसामग्र्यभावनिबन्धनतया नात्यन्तिकत्वांशेऽपि तत्त्वज्ञानोपयोगः ।

ननु "दुःखेनात्यन्तविमुक्तश्चरति" इति श्रुतिबलाद्विशिष्टो दुःखध्वंसः साध्यो न केवलं विशेषणमेवेति चेत्तत्राह—

वस्तुतत्त्वं श्रुतिर्ब्रूते जनकत्वं न जन्यताम् ।

वस्त्विति ।

ननु मास्तु प्रारब्धदुःखनाशस्तत्त्वज्ञानस्य फलं किन्तु सञ्चितकर्मनाशस्तत्राह—

सञ्चितक्लेशनिर्मुक्तिर्न मुक्तिरपुमर्थतः ॥ १०९ ॥

सञ्चितेति । अपुमर्थत इति । सुखदुःखाभावान्यतरभिन्नत्वादित्यर्थः ।

नन्वसौ मुक्तौ व्यापारोऽस्तु, तत्राह—

मुक्तिस्वरूपालाभे तु व्यापारोऽपि कथं भवेत् ।

मुक्तीति ।

ननु दुःखानुत्पादः सास्तु तत्राह--

नानुत्पादस्तु दुःखानामसाध्यो मुक्तिशब्दभाक् ॥ ११० ॥
गौणी चेत्साध्यता वाच्या सम्भवे मुख्यसाध्यता ।

नानुत्पाद इति । सम्भवेति । यदा तत्त्वज्ञानसत्त्वं तदा दुःखानुत्पादः यदा तत्त्वज्ञानाभावस्तदा दुःखमित्यन्वयव्यतिरेकोल्लेख्या साध्यासाध्यसाधारणीत्यर्थः ।

सम्भवे साध्यता गौणी न वाच्या निष्प्रयोजना ॥ १११ ॥

गौणी=योगक्षेमसाधारणी ।

इदानीं विदेहमुक्तिं पक्षभेदेन दर्शयति—

धारा वाऽखण्डता वापि प्रेम्णः सञ्चितनाशतः ।
देहग्रहणविक्षेपनिवृत्त्या सुस्थिरा हि सा ॥ ११२ ॥

धारेति । सा=धाराऽखण्डता वा ।
ननु पक्षद्वयं कुतस्तत्राह--सञ्चितेति ।
सञ्चितनाशे सायुज्यापत्तिस्तत्राह--

सायुज्यस्य प्रसक्तिस्तु जीवत्वं चित्ततो यदि ।

सायुज्यस्येति । चित्ततः=चित्तोपाधेः ।
ननु तत्त्वज्ञानस्य प्रेमाज्ञाननिवृत्तिश्चोभयं कार्यम् । तत्केयं लाघवगौरवचिन्तेति । तत्राह—

अज्ञानविलयस्तावत्तत्त्वज्ञानेन जन्यताम् ॥ ११३ ॥
तावतापि तमादाय न मुक्तिपदशक्यता ।

अज्ञानेति । मुक्तिपदवाच्यतावच्छेदके गौरवप्रसङ्गादितिभावः । गुणाकरस्तु । तप्तायसि सलिलबिन्दोरिव चरमदेहपातसमये फलीभूतप्रेम्णो भस्मीभावोपगमात्तादृशप्रेमभस्मोपलक्षितमात्मस्वरूपं पुमर्थो द्वैताद्वैतमतसाधारणः ।

अनन्तजन्मसम्भूताराधनासाधनार्जितम् ।
प्रेम यस्य हरौ लीनं स मुक्तपदवीं गतः ॥

इति नारदपञ्चरात्रादित्याह ।

ननु चरमप्रेम्णि श्रवणादिनवविधभक्तिसाध्यत्वं श्रूयते तत्कथमिह तन्नैरपेक्ष्येणोन्मादिप्रेमसाध्यत्वमुच्यते तत्राह—

उन्मादिभूमिकावस्था श्रवणादिर्न भूमिका ॥ ११४ ॥

उन्मेति । तथाहि । श्रवणतैक्ष्ण्यकारिण्युन्ने शब्दज्ञानतज्जन्यवाक्यार्थज्ञानोभयरूपस्य श्रवणस्य कलितोत्तरभाविनि दलिते कीर्त्तनस्मरणयोः, कलिते कीर्त्तनवन्दनार्चनपदसेवनप्रेमविशेषरूपसख्यानां, विहृते दासचरितस्येव प्रीतिफलकस्य कर्मणो दास्यरूपस्य, गलिते स्वस्यार्पणेन निजयोगक्षेमचिन्तायामनभिनिवेशस्यात्मनिवेदनस्यावस्थात्वान्न भूमिकात्वम् ।

भक्तिरत्नाकरग्रन्थवर्णितं पारिभाषिकम् ।

श्रवणादि तदर्थस्तु फलप्रेम्णि फलात्मकम् ॥ ११५ ॥

भक्तीति । पारिभाषिकमित्यादि । अन्यदीयवचने तस्य तदीयस्य वोक्तितादात्म्यभ्रमरूपमाद्यं फलीभूतम्, नामादिस्खलनं द्वितीयम्, प्रायश्चित्तादनपाकरणं तृतीयम्, अनवरततदीयचरणसामीप्याभिलाषरूपं चतुर्थम्, सेवनोत्कण्ठासातत्यं पञ्चमम्, वन्दनौत्सुक्यादुपरमः षष्ठम् । इतरविषयेष्वनादरः सप्तमम्, प्रायस्तन्मयीभवनमष्टमम्, आत्मविस्मरणं नवममिति भक्तिरत्नाकरग्रन्थेऽभिहितमपि फलरूपे प्रेम्णि फलात्मकावस्थारूपमेवेत्यर्थः ।

ननु सन्तृप्ते कथं शबलप्रेमफलात्मतादृशश्रवणादीत्यत्राह—

अत्रापि शबलप्रेमसंस्कारादिदमिष्यते ।

अत्रापीति । अत्र=सन्तृप्ते । इदं=पारिभाषिकं श्रवणादि । "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥" इति स्मरणादिति भावः ।

इदानीं प्रेमवर्णनायां कतिपयप्रकारान् दर्शयति—

वाच्यत्वमपहायैव प्रेमवर्णनमिष्यते ॥ ११६ ॥

वाच्यत्वमिति । व्यक्तिवेद्यत्वमुचितमिति भावः । तत्र द्वयमपि यथा—

अपि सन्निहिते रमापतेः प्रतिपत्तिं जनयन्ति नेन्द्रियाणि ।
त्वयि याततमेन चेतसा सममेषां न कदापि योगिता ॥

अत्र श्रीकृष्णकर्त्तृकं प्रेम त्वदेकत्वं ब्रवीतीति सखीभी राधां प्रति प्रतिपाद्यत इति व्यङ्ग्यम् ।

अन्यदप्याह—

प्रेमाविष्करणं कार्यमद्धा योगविवर्जिते ॥ ११७ ॥

साक्षाद्योगशालिनि प्रेमाविष्करणापेक्षया व्यवहितसम्बन्धे वस्तुनि प्रेमाविष्करणं न्याय्यमित्यभिप्रायः।

यथा—

वत्स ! राममनुगच्छ महेच्छं स्वच्छशीलमनुशीलितलीलम् ।
त्वत्कृतोचितपदाब्जसपर्यः संस्मरिष्यति स मां जननीषु ॥

अत्र सुमित्रया श्रीरामानुयायिलक्ष्मणमनादृत्य श्रीरामप्रेमाविष्करणं कृतम् ।

यथा वा—

यासि याहि सह बन्धुनामुना वार्यसे न पुनरुच्यसे मया ।
त्वं तथाचर चरित्रमुच्चकैर्मामयं सुतवतीं यथा वदेत् ॥

इति लक्ष्मणं प्रत्युक्त्वा—

सौजन्यशीलभरमण्डितमौनवृत्ति-
रेका परा तु परवैरधराधमैव ॥
अन्या पुनस्तु गुणहीनतया न गण्या
त्वं तात ! याहि जननीरहितोऽसि येन ॥

इत्युक्त्वा श्रीरामप्रेमाविष्कृतम् ।

यथा वा—

शतधा गर्हिता तात ! त्वन्मातुर्भरतप्रसूः ।
नवनीतमयी सूनौ सैषा यममयी हृदा ॥

यथा वा—

स रामो विपिनं यातु कैकेयीहर्षनोदितः ।
त्वं वसात्रैव मा याहि नेत्रयोरसि जीवनम् ॥

अत्र कौशल्यया श्रीरामे प्रेमाविष्करणमकृत्वैव लक्ष्मणे प्रेमाविष्कृतिः कृता ।

यथा वा—

निजरथपरिसर्पच्चक्रनामानुबन्धा-
द्घटयति घनकोकानेकशोकापनोदम् ।
अनुदिनमुदितात्मा भानुमांस्तेन जाने
जगति परमचारु प्रेमभाजां चरित्रम् ॥

अत्र रविसेवानुरक्तचक्रे प्रेमाविष्करणमकृत्वैव रवेश्चक्रवाकेषु तद्दर्शितम् ।

इदानीं प्रेमवर्णनायामनौचित्यप्रकारान्समासतो दर्शयति—

येन येन प्रकारेण प्रेम्ण्यनौचित्यमापतेत् ।
तं प्रकारं विहायैव प्रेम वर्ण्यं प्रयत्नतः ॥ ११८ ॥

प्रेम्णि क्षयित्ववर्णनमनुचितम् ।

यथा—

यन्मया साधितं प्रेम प्रयत्नेनापि भूयसा ।
कालपक्केन वयसा सहसा तद्व्यपोहितम् ॥

अत एव—

तीर्णा बाष्पपरम्परैव सरितां वृन्देषु कः सम्भ्रमः
सोढा कातरदृष्टिरेव कियती वज्राभिघातव्यथा ।
श्वासा एव नतभ्रुवो न गणिताः के नाम झञ्झानिलाः
प्रेमैवायमुपेक्षितो यदि पुनः प्राणेषु कोऽनुग्रहः ॥

इत्यभियुक्तपद्येऽयमितिपदेन प्रत्यक्षनिर्दिष्टे प्रेम्णि प्रेमविषयसान्निध्यसम्पादनरूपप्रेमफलस्यानाश्रयणादुपेक्षितत्वमात्रमुक्तं न तु त्यक्तत्वमभिहितम् । अत एव प्रेमफलस्य प्रेमविषयसान्निध्यसम्पादनरूपस्याकरणे निन्दा श्रूयते ।

यथा—

श्रिया गेहे मयारण्ये रामस्त्यक्तस्त्वया पथि ।
वद मुद्रे ! पुरस्त्रीषु प्रत्ययं कः करिष्यति ॥

किं बहुना निषेध्यत्वेनापि क्षयित्वाभिधानमनुचितम् ।

यथा—

रथाङ्गनाम्नोरिव भावबन्धनं बभूव यत्प्रेम परस्पराश्रयम् ।
विभक्तमप्येकसुतेन तत्तयोः परस्परस्योपरि न व्यहीयत ॥

अत्र परस्परस्योपरि वर्द्धतेस्मेत्युचितम् । एवं प्रेम्ण्यन्यादृशविषयाधारयोर्वर्णनमनुचितम् । अत एव मत्स्यकूर्मादिविषयं भक्तसम्बन्धि प्रेम न वर्णनीयम् । यत्रोत्प्रेक्षासमर्थितेनार्थेन प्रेम समर्थ्यते तत्र तस्य प्रेम्णोऽन्यादृशेऽप्याधारे वर्णनमुचितम् ।

यथा—

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥

अत्र नूपुरे चरणारविन्दविश्लेषदुःखोत्प्रेक्षासमर्थितमौनेन तादृशचरणारविन्दविषयकप्रेम समर्थितम् ।

यथा वा—

जरया बत दुर्भगश्रिया प्रसभं मे परिशीलितात्मनः।
वनितेव मनोहराकृतिः कविताऽप्यद्य मुखं न चुम्बति ॥

अत्रोत्तरार्द्धवाक्यार्थसमर्थनार्थमुत्प्रेक्षां विना विषयप्रेम जरायामाविष्कृतम्। सामान्यतोऽनुचितार्थकपदोपादानमप्यनुचितम्। तत्र क्वचित् प्रेमविषयाधारविशेषणात्मकमन्यद्वा।

यथा--

अपि शूलधरो निरामयः शवमुण्डाभरणोऽपि पावनः।
अपि भैक्ष्यचरो महेश्वरश्चरितं ते निखिलं विलक्षणम् ॥

यथा वा—

न चेतश्चाम्पेयस्तबकमकरन्देऽपि रमते
समुत्कण्ठा काचिन्न च विकचपुन्नागमुकुले।
न हृद्ये मल्लीनामपि मधुनि वाञ्छा मधुलिहः
समाघ्राय त्यक्तो यदवधि लवङ्गीपरिमलः ॥

अत्र प्रेमविषयलवङ्गीसम्बन्धिपरिमलस्य त्यक्त इति विशेषणमनुचितम्। समाघ्रातो दैवादिति तु युक्तः पाठः।

उचितार्थकपदोपादानं तु प्रेम्णि समुचितम्।

यथा--

कृत्वा प्रबुद्धकमलामखिलां धरित्री-
मम्भोनिधेर्विशति गर्भमसाविदानीम्।
अन्तःप्रसुप्तहरिनाभिसरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥

अत्र भगवन्नाभिसरोजविषयकप्रेम्णि प्रतिपाद्यमानेऽरविन्दबन्धुरित्युचितं पदम्। एवमनुचितघटनाप्ययुक्ता।

यथा--

त्वय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे!
नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति ॥

अत्र प्रेमविषयस्य रामस्योपकारकं हनूमन्तं प्रति नरसामान्येनोपकारकनिष्ठविपद्वाञ्छाप्रतिपादिकोक्तिर्न युज्यते।

त्वदलङ्कृतिरेवास्तु यत्त्वयोपकृतं हरे!।
परोपकारकर्त्तॄणां विपदो ह्यापदं गताः ॥

इति तु घटना समुचिता। एवं "नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ" इत्यत्राप्यरसिकत्वप्रतीत्या भक्तकृतनमस्काराभिव्यङ्ग्ये

प्रेम्णि अनुचितत्वं पर्यवस्यति। "दैत्यार्त्तभूपकुलजस्त्रीकुचोल्लासिने नम" इति पाठे तु न कापि क्षतिः। एवं नायकविषयनायिकाकृतानुनयपल्लवनमनुचितम्। एवं प्रेमाधारेण बहुतरस्यानुनयस्य वचसा प्रदर्शनं प्रेमविषये न कार्यम्।

यथा--

यत्कृते किं न विहितं मयाहङ्कृतिमुज्झता।
तथापि राधे! नाद्यापि जातासि प्रणयोन्मुखी॥

उक्तिविशेषेण तु स्वकृतबहुतरानुनयप्रतिपादनेऽपि न दोषः।

यथा--

तासां मयि कथं प्रेम नेक्षिता हेलयापि याः।
कृताराधनसङ्घापि राधे! त्वं नासि रागिणी॥

प्रेमविषयभिन्ने तु प्रेमाधारस्य प्रेमविषयगोचरं बहुतरस्वानुनयप्रदर्शनमुचितम्।

यथा--

तत्कृते किं न विहितं भवत्योऽपि नता मया।
तथापि दूति! सा राधा न मनागपि तुष्यति॥

सख्यादेरपि प्रेमविषयेऽन्यत्र वा प्रेमाधारस्य पृथुतरसेवाप्रदर्शनमुचितम्।

यथा--

त्वत्कृते विहितं घोरमनया विपिने तपः।
तथापि शम्भो! नोदेति भवतः करुणाकणः॥

यथा--

यत्कृतं भीममनया चरितं विपिने तपः।
तथापि स महेशानो धातस्त्वामिव निष्ठुरः॥

एवं प्रेमाधारस्य समासादितप्रेमकलहं प्रेमविषयं परित्यज्य विपिनगमनादिकमनुचितमित्यादि बोद्धव्यम्। एवं कार्यमुखेन प्रेम्णा शंसितत्वस्य वर्णनमसमञ्जसम्।

यथा--

निधेहि विपुलं प्रेम मयि स्वाङ्घ्रिसरोरुहोः।
तदेव देव! निर्वैधकामधाम भविष्यति॥

अत एव--

या लोभाद्या परद्रोहाद्यः पात्रे यः परार्थतः।
मैत्री लक्ष्मी व्ययः क्लेशः सा किं सा किं स किं स किम्॥

इत्यादि शास्त्रमुपपद्यत इत्यलं पल्लवितेन।

स्वोचिताचारेणान्यगतोचिताचारेण स्वगतानुचिताचारेण परगतानुचिताचारेण दोषाणामुपेक्षणीयत्वप्रकाशनेन च स्वनिष्ठं प्रेमाभिव्यज्यते । क्रमेणोदाहरणानि—=

सम्प्रेषितायाः प्रभुणोर्मिकायाः शाखामृगेणादरतोऽर्पितायाः।
चिरं चकारावनिभूः क्रमेण शिरोऽक्षिवक्षस्थलसन्निवेशम् ॥

अत्रादरसमर्पणरूपोचितक्रियया स्वनिष्ठया स्वनिष्ठरामविषयकं प्रेम हनूमता व्यज्यते सीतयापि तादृशसन्निवेशेन ।

द्वितीयं यथा—

मयि सम्यक्कृतं वैरप्रतीकाराय पातकैः ।
अदर्शि करुणाम्भोधेस्तस्यैवालयपद्धतिः ॥

अत्र पातकगतोचिताचारक्रियया पापाश्रयेण स्वनिष्ठमीशविषयकम्(१) ॥

तृतीयं यथा—

ऐशं शापमचेतनं न जयितां जाने तदुच्छेदना-
द्यः पन्थानमरुद्ध वन्द्यचरणस्तच्छासनं कः स्तवः ।
यश्चापि न्यपतच्छिरोभिरवनौ सोऽपि स्वकीयानयै-
र्मत्तो विक्रम एष एव समभूद्यज्जानकीमत्यजम् ॥

अत्र स्वगतजानकीत्यागरूपानुचिताचारेण स्वनिष्ठं जानकीविषयम् ।

चतुर्थं यथा—

रामराज्यविषये रुरोद यत्सा प्रतिश्रुतवरा तदौचिती ।
तन्मुखेक्षणविधावियं कुतो रोदितीह मम लोचनद्वयी ॥

अत्र कैकेयीगतानुचिताचारेण दशरथेन स्वनिष्ठं रामविषयम् ।

पञ्चमं यथा—

बाल्य एव गुरुगेहमागता नाधुनापि निपुणा क्रियाविधौ ।
प्रार्थना भवति राम! मामकी पाल्यतामविनयापि जानकी ॥

अत्रानैपुण्यदोषस्योपेक्षणप्रकाशनेन जनकेन सीताविषयमात्मनिष्ठं प्रेम प्रकाश्यते । अत्र जनकोक्तौ जानकीपदगम्यो जनकः पारोक्ष्येण निर्दिष्टः । तत्फलं साधुत्वपक्षपाताभावप्रतिपत्तिरनौचित्यपरिहारश्च । तत्राद्योऽत्रैव दर्शितः ।

अन्त्यो यथा——

येषां निमेषोन्मेषाभ्यां जगतः प्रलयोदयौ ।
तादृशाः पुरुषा याता मादृशां गणनेह का ॥

---

(१) प्रेम व्यज्यत इति शेषः। एवमधस्तनेष्वपि वाक्येषु योजनीयम् ।

अत्र श्रीमतां कियदायुःपरिमाणमिति श्रीमता रामचन्द्रेण पृष्टस्य वशिष्ठस्योक्तिरियम् । लीलावतारा भवतोऽपि याता इति साक्षात्कथ्यमानो वृत्तान्तोऽसमञ्जस इति पारोक्ष्येण निर्दिष्टः । अप्रस्तुतप्रशंसापि पारोक्ष्येण कथनमेव । साक्षान्निन्दास्तुत्योरनुचितयोः परिहारात् ।

तद्यथा--

अनेकजन्मसंसिद्धपापश्रेणिरियं किल ।
सखि ! बुद्धिविहीनानां मानिनां यत्प्रबोधनम् ॥

अत्र राधाविषये कृतमानं श्रीकृष्णं पुरस्कृत्य सखीं प्रति दूत्या उक्तिः ।

शीलसौजन्यवात्सल्यबुद्धिवैदग्ध्यशालिनीम् ।
या मेलयत्यनायासात्तस्याः कौशल्यविद्धिधिः ॥

इत्यधिकमाकरादाकलनीयम् ।

---

अन्यदप्याह—

उदयादिमुखैरेतद्गदितं चारुतां व्रजेत् ।

उदयादीति । एतत्=प्रेमेत्यर्थः । उदयादिनेत्यत्रादिना गाढत्वोद्बोधादिपरिग्रहः । तत्रोदयो द्वेधा । स्वरूपेण क्वचिदुत्कर्षेण ।

तत्राद्यो यथा—

अनन्तजन्मार्जितपुण्यरूपा वैखानसानां प्रसमीक्ष्य लीलाः ।
तत्पादपङ्केरुहसन्निधानस्थितौ बबन्धादरदाम रामः ॥

अत्र श्रीरामे वैखानसविषयं प्रेमोदितमिति कविना वर्णितम् ।

उत्कर्षेण प्रेमोदयो यथा—

सीताकृतैर्मधुरलोचनसन्निवेशैः
सम्भाषणैर्दृढतरैः परिरम्भणैश्च ।
सञ्जातहर्षपुलकावलिराकुलः सन्
देहे ममौ न दिननाथकुलावतंसः ॥

अत्र चिरविप्रयुक्तसीताकृतपरिरम्भणादिना श्रीरामे सीताविषयकोत्कृष्टप्रेमोदयो वर्णितः ।

गाढत्वेन प्रेमवर्णनं यथा—

तदीयं बलमालोक्य गतः प्रेयान् नियुज्य मे ।
कथमालोकये सख्यस्तस्य चन्द्रमसो मुखम् ॥

यथा वा प्रागुक्तमुदाहरणम्-

प्रियं तु पृष्ठतः कृत्वा विधाय तनुविस्तृतिम् ।
सज्जचापस्य लुब्धस्य पुरोऽभूच्चक्रकामिनी ॥ इति ।

यथा वा--

प्रियं हृदि स्थितं त्रातुं मारमुक्तशराद्वधूः ।
करोति कवचं साम्बु पद्मिनीपल्लवोत्करम् ॥

यथा वा—

अस्तु म्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः ।
तदपि न मुञ्चति स त्वां वसुधाछायामिव सुधांशुः ॥

यथा वा—

त्वदन्तिकादेव समागतं सा मत्वाखिलं लोकमनन्यवृत्तिः ।
वार्तां मुहुः पृच्छति तावकानां श्रुत्वापि तामश्रुतवद्विधत्ते ॥

अत्र प्रेम गाढत्वेन दर्शितम् ।

उद्बोधेन यथा--

गलद्बाष्पश्रेणीचकितनयनालोचितककुप्
शनैर्मुक्तश्वासा परिकलितमौनाकुलमनाः ।
प्रियं दृष्ट्वा नानाविधयुवतिसङ्गादतिकृशं
समुद्बुद्धस्वान्ता समजनि नितान्तं कुलवधूः ॥

इत्यादि ज्ञेयम् ।

एतत्प्रकाराविषयं स्वरूपप्रेम गद्यते ॥ ११९ ॥

एतदिति । यत्र श्लोके उक्तप्रकारातिरिक्तप्रकारेण प्रेम निरूप्यते सख्यादिभिस्तत्स्वरूपमात्रं प्रेमोच्यते ।

यथा—

अयि वाणि ! मृषा नाहं लक्ष्मीस्तस्यास्मि यस्य तु ।
भार्या वक्षसि किं गौरि ! मौनं ते किंनिबन्धनम् ॥

अत्र किञ्चिदाविष्कृताभिमानां सरस्वतीं प्रति गौरीसन्निधाने लक्ष्म्या उक्तिः । अस्यार्थः । अयि वाणि! औद्धत्यकारिण्यामपि त्वयि मृद्वेवाहं ब्रवीमि इतरस्त्रीवदहं न मृषावादिनी । अर्थात् त्वमिव । का त्वमिति चेत्तत्राह–लक्ष्मीरिति । किमेतावतेति चेत्, तत्राह—तस्यास्मीति । स कस्तत्राह–यस्येति । यस्य वक्षसि भार्यास्ति तस्यास्मि । तथाचाहमेव तस्य वक्षसि तिष्ठामीति भावः । इत्थं सरस्वतीमभिधाय स्वोक्तार्थे सम्मतये गौरीं पृच्छति–किं गौरीति । तथा च त्वयात्र सम्मतिर्देयेति भावः । शिवार्द्धाङ्गव्यापितया गृहीताभिमानां विष्णूरःस्थलमात्रव्यापिनीं स्वमनादृत्यादत्तोत्तरां गौरीं प्रत्याह–मौनं ते किं निबन्धनमिति तथा च मया सह तव कः कलहः । प्रियालिङ्गने त्वं चेत् द्व्यङ्गुलेनाधिकासि अहं वा न्यूनास्मि ततः किम् । एतदपेक्षयावयोः

समानप्रतिपत्तिरस्तीति भावः । तथा च पत्यनादृतास्मदाश्रितगृहेषु पर्यटन्त्यस्मत्प्रसादमात्राधीनजीवना किमेषास्मत्पुरः स्वाभिमानमुररीकरोति । अत्र परमार्थतस्त्वमपि न मादृशी गौरीत्वादिति लक्ष्म्याः कौटिल्यं व्यङ्ग्यम् । अत्र कविना लक्ष्म्यां विष्णुकर्तृकं प्रेम लक्ष्म्युक्तवचनं पुरस्कृत्य प्रकटीकृतम् । तच्च नोदयादिप्रकारैरिति स्वरूपमात्रप्रेमेति निगद्यते ।

यथा वा—

अद्यापि तन्मनसि सम्परिवर्त्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या ।
जीवेति मङ्गलवचः परिहृत्य रोषा-
त्कर्णेऽर्पितं कनकपत्रमनालपन्त्या ॥

अत्र मानसमये प्रेमस्थितेराविष्करणादिदमपि स्वरूपमात्रप्रेमेति मन्तव्यम् ।

एवं प्रेमविषयेण प्रेमाधारे स्वकर्तृकप्रेमाविष्करणं यथा—

मद्वाचिकेन वक्तव्यः सुमित्रातनयस्त्वया ।
भवान्तरेऽपि गुणवान्बन्धुर्भवतु मे भवान् ॥

प्रेमविषयेण स्वस्मिन् परकृतप्रेमाविष्करणं यथा—

अद्य जीव ! तव सैव वैरिणी भूसुता क्वचिदपि स्थिता सती ।
यद्विचिन्ततमदीयसेवनक्षमतो न भवतो विनिर्गमिः ॥

अत्र श्रीरामेण स्वजीवस्त्वद्विषयकप्रेमभाक्सा नेति बोध्यते ।

प्रेमाधारेण प्रेमनिरूपणं यथा—

अद्यापि नम हृद्याङ्घ्रियुगं सुग्रीवशर्मदम् ।
नमद्ग्रीवातिरेकेण सुग्रीवः कतरो भुवि ॥

अत्रावाप्तसुतशोकायाः स्वामिजीवनमात्रमाकाङ्क्षन्त्याः प्रेमाधारभूताया मन्दोदर्याः प्रेमविषये भर्त्तर्युक्तिः ।

यथा वा—

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेवास्यवलम्बनम् ॥

हरिदासादयस्तु स्वरूपमात्रप्रेम्णोऽस्य स्वरूपलक्षणमन्यादृशमाहुः । तथाहि । येन केनचिद्व्यापारेण प्रेम्णि प्राप्तस्य प्राप्तव्यस्य वर्त्तमानसमये भ्रमात्सम्भावितस्योदितप्रायस्य वाऽनौचित्यस्य कमपि कमनीयं व्यापारमवलम्ब्य प्रेमाधारेण प्रेमविषये परिहारः क्रियते तत् शोधिताङ्कापरनामकं स्वरूपमात्रप्रेमोच्यते ।

तत्राद्यो यथा—

आगतोऽसि तदैताभ्यां नेत्राभ्यां नासि वीक्षितः।
तत्रागो नैतयोरेते वञ्चिते गुरुलज्जया॥

प्रियानवेक्षणरूपेण व्यापारेण पूर्वजातस्य प्रेमविषयानादररूपस्य प्रेमानौचित्यस्याधारभूतया कयापि गोप्या गुरुलज्जाकर्तृकवञ्चनरूपं व्यापारमवलम्ब्य परिहारः प्रेमविषये कृतीकृतः।

द्वितीयो यथा—

अच्युतचरणतरङ्गिणि! शशिशेखरमौलिमालतीमाले!।
त्वयि तनुवितरणसमये हरता देया न मे हरिता॥

अत्राच्युतचरणतरङ्गिणीत्वेन गम्यमानेन निजचरणव्यालुण्ठनव्यापारेण प्राप्तव्यस्य प्रेमविषयगङ्गानादररूपस्य प्रेमानौचित्यस्य गङ्गाविषयकप्रेमभाजा केनचित् हरतायाचनरूपं रमणीयव्यापारमासाद्य प्रेमविषये गङ्गायां परिहारः कृतः।

तृतीयो यथा—

वीतरागं न मां विद्धि भद्रे! काषायवाससा।
सम्भृतस्वान्तरागो हि बहिर्वसनमागतः॥

अत्रायं सम्प्रति परिधृतकाषायवसनो मयि रागरहित इति तर्कयन्तीं कांचित्प्रति अनुरागशालिनः कस्यचित्काषायवसनाधिवासिनो यतेरियमुक्तिः। काषायवसनधारणरूपव्यापारेण प्रेमविषयसम्भावितस्य प्रेमक्षीणत्वस्य प्रेमानौचित्यस्य तादृशनायिकाविषयकप्रेमशालिना यतिना रागकर्तृकवसनप्राप्तिरूपं व्यापारचमत्कृतमादाय प्रेमविषये नायिकायां परिहारो रचितः।

यथा वा—

लङ्काराज्यं तत्त्वतस्तात! तस्याः कान्तो यस्याः सङ्गरेऽभेदि बाणैः।
लब्ध्वा राज्यं माकृथास्तत्र हेलां सत्यामुच्चैर्मादृशः सानुबन्धाः॥

अत्र श्रीरामेण मन्दोदरीप्रेमविषये स्वानुरागाभावभ्रमेण विभीषणकर्तृकावहेलारूपानौचित्यस्य स्वानुबन्धरूपव्यापारप्रकाशनेन परिहारः कृतः।

चतुर्थो यथा—

पद्मे! त्वन्नयने स्मरामि सततं भावो भवत्कुन्तले
नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः।
इत्युत्स्वप्नवचो निशम्य सहसा निर्भत्सितो राधया
कृष्णस्तत्परमेव तद्व्यपदिशन् प्रेमाकुलः पातु नः॥

अत्रोत्स्वप्नवचोलक्षणव्यापारेणोदितप्रायस्य प्रेमविषयानादररूपस्य प्रेमानौचित्यस्य प्रेमाधारेण श्रीकृष्णेनोत्स्वप्नवचोऽर्थान्तरप्रकाशनरूपमधुरव्यापारेण प्रेमविषये राधायां परिहारो निर्मितः।

यथा वा--

निजगेहे समायान्तीं राधां गुरुजनाकुले।
दृष्ट्वानुनयमारेभे सूर्योपस्थानकैतवात्॥

अत्रानुनयानाचरणरूपव्यापारेणोदितप्रायस्य प्रेमविषयानादररूपप्रेमानौचित्यस्य परिहारः कृतः।

अपरं वा—

वदन्ती जारवृत्तान्तं पत्यौ धूर्त्ता सखीधिया।
पतिं बुध्वा सखि! ततः प्रबुद्धास्मीत्यपूरयत्॥

अत्र जारवृत्तान्तकथनरूपेण व्यापारेणोदितप्रायस्य स्वकृतानादररूपस्य स्वविषयकपतिनिष्ठप्रेमानौचित्यस्य प्रबुद्धास्मीति पूरणेन परिहारः कृतः। यद्यप्यत्र प्रेमाधारकर्तृको नायं परिहारस्तथापि प्रेमानौचित्यपरिहारमात्रस्य स्वरूपप्रेमतयाऽव्याप्त्यनवकाशात्। एवं प्रकारान्तरैरपि परिहारोऽत्रसेयः॥

यत्र स्वगतं प्रेमान्यत्रारोप्य स्वस्मिंस्तदभावप्रदर्शनेन परिणामे स्वस्मिन्नेव दृढीक्रियते तदपन्हुतं प्रेमोच्यते।

तद्यथा—

नेत्रद्वयीं समालिङ्ग्य क्षणं स्थित्वा च धूमवत्।
स निर्गतोऽधुना सैव वारिधारा विमुञ्चति॥

अत्र मामपरिचितामिव विधाय मन्नेत्रद्वयीकृतालिङ्गनः क्षणमात्रमेव तत्सविधे कृतासनो धूमवत् केन पथा क निर्गत इति न लक्षितः। इदानीं नेत्रद्वय्येव रोदिति तद्विषयकप्रेम्णः फलं ब्रूते। एवकारान्नाहं तादृशफलभाक् सम्यगेवैतद्वृत्तमन्यथा ममाप्येतद्रुदितं स्यादिति कस्याश्चिन्नायिकायाः सखीं प्रत्युक्तिः। अत्र परिणामे स्वविषयकं प्रेम दत्त्वा गतः स इति स्वकर्तृकप्रेम्णो गोपनादपन्हुतं प्रेमेति ज्ञेयम्।

यत्र तु सुखजनकव्यापारेण दृष्टेन श्रुतेन वान्यविषयकमन्यनिष्ठं प्रेम तटस्थस्य गोचरोऽपि दुःखनिराकरणव्यापारेण नियतं व्यक्तं तद्विवृतं प्रेमोच्यते।

उदाहरणं यथा—

सहसीतेन रामेण पुरः सञ्चारिणाध्वगाः।
लीलारोपितबाणेन वारिताः कण्टकादयः॥

अत्र वनवासिनां सान्निध्येन व्यापारेण सीतायां रामकर्तृकं प्रेम जानतामपि श्रीरामकर्तृककण्टकादिनिराकरणव्यापारेणातितरां विदितमभूत्॥

यत्र तु गूढवाक्यार्थोऽनवगतो यावद्वाक्यं स्वबोधनक्षममपेक्षते ततः पूर्वमेव प्रवृत्तेनाभिनयरूपव्यापारेण बोधितस्तेन प्रतीयमानं प्रेमाभिनेयमित्युच्यते।

यथोदाहरणम्—

प्रणयकुपितप्रियापदलाक्षासन्ध्यानुबन्धशशिचिरेन्दुः।
तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति॥

अस्यैव नटाभिहितवाक्यस्य पूर्वार्द्धे पुरोभवता परस्परसंयुक्तपताकाद्वयेन प्रणामः, उत्तरार्द्धे ग्रीव इत्यन्तेन क्रोडीकृतभुजलतायुगलेन व्यापारेणालिङ्गनविशेषश्च प्रतिपाद्यते। ततोऽभिनयद्वयसहकृतेन जयतीत्यनेनोद्बुद्धं शिवविषयं गौरीनिष्ठप्रेमाभिनेयमित्युच्यते। न चात्र श्लोके प्रणामादिकं शब्दव्यङ्ग्यमेवास्त्विति वाच्यम्। शब्दव्यङ्ग्यतापेक्षया अभिनयव्यङ्ग्यतायां माधुर्यात्। अत एवोक्तं सङ्गीतार्णवे—

वाच्यतापेक्षयार्थस्य शब्दोत्थव्यङ्ग्यतोचिता।
ततोऽप्यभिनयात्तस्य सातीव हृदयङ्गमा॥ इति।

ये त्वत्राचक्षते-योऽर्थः पूर्वशब्देन प्रतिपादितः स एवाभिनयेन पुनर्बोध्यमान अभिनेय इत्युच्यते इति। तदपरे न क्षमन्ते। बोधितस्य पुनर्बोधने फलाभावात्। अथ देशकालवयोऽवस्थागुणक्रियाजातिकार्यकारणादिरूपस्वभावमुखेनाभिनेयार्थस्य प्रतिपत्तिरेव फलमिति चेत्, सत्यम्। विवक्षितविवेके तादृशस्वभावस्यैवाभिनेयतायां पर्यवसानेन शब्दप्रतिपादितार्थस्याभिनेयत्वाभावादिति॥

यत्र प्रथममाशंसितमन्यदुपलभ्यते पश्चात्तु प्रेम तदाशंसितं प्रेमेत्युच्यते।

यथा—

त्वदभिन्नमिति ब्रूते जीवमेनमयं श्रुतिः।
ममायमित्यपि वचस्त्वन्मुखात्तु न निर्गतम्॥

अत्र त्वदभेदस्य पूर्वमाकाङ्क्षितत्वं गम्यते परिणामे तु तत्कर्तृकप्रेम्ण इति ।

यत्र बलवत्तरविरोधिना आशंसितस्नेहः प्रतिबध्यते स प्रतिरुद्धाशंसितस्नेह इत्युच्यते ।

यथा—

रत्नाकरोऽसि हरिणापि समादृतोऽसि
मैनाकनामगिरिणापि समाश्रितोऽसि ।
एकं ब्रवीमि जलधे ! यदि ते न कोप-
स्तत्कर्म साधय पयस्तव येन पेयम् ॥

अत्र समुद्रं प्रत्युक्तौ सकलमहितजनविहितजलापानमेव त्वद्विषयकस्नेहं रुणद्धीति गम्यते ।

उन्नीतस्नेहो यथा—

गज ! पङ्कनिमग्न ! पीवर ! प्रणयी वीरतमो न कश्चन ।
भवदुद्धरणाय वीक्ष्यतेऽवसरो न क्षणमप्यजस्य तु ॥

अस्यार्थः । हेगज ! पङ्कमग्नेन भवता भवदुद्धारः सञ्जातदृशशोफशरीरतया न सम्भावितः । नापि प्रणयिना वीरभिन्नेन तस्याप्यसामर्थ्यात् । न हन्त प्रणयशून्येन वीरेण, तस्य प्रयोजनाभावात । न खलु प्रणयवीर्योभयशालिना जनेन, तस्य दुर्लभत्वात । न पुनरनुक्षणविविधविश्वनिर्माणैकरसशालिना विधिना, तस्य क्षणमप्यवसराभावादित्यर्थकप्रकृतश्लोकात् कविनिष्ठविपत्प्राविष्टजनविषयकस्नेहः श्रोतृभिरुन्नीयते ।

यथा वा—

सर्वस्य शोभाकरमस्ति सर्वं द्वैतादिदं द्वैतमथान्यदेव ।
प्रशंसया जीवनमीशनाम्नो मुखारविन्दादपि नावसानम् ॥

यथा वा––

गुरूणामभ्याशे विफलबहलाभ्यासघटनै-
र्वृथा नेतुं कालं तव भवति काऽलं बत मतिः ।
अपर्णामन्तश्चेद्व्रजसि धृतपर्णाशनरति-
र्विलम्बः कः कर्णामृतवचननिर्माणविधिषु ॥

यथा वा––

दुर्लभौ प्रथममार्यपण्डितौ तौ पुनर्जडखलौ न दुर्लभौ ।
आर्यपण्डितजनस्तु दुर्लभो दुर्लभत्ववशतोऽल्पजीवनः ॥

यथा वा—

तिलस्य तस्य धन्यस्य रीतिरन्यैव लक्ष्यते।
गतासुरपि यो वक्ति सद्यः सुमनसां गुणम् ॥

इत्यादौ कविनिष्ठस्तत्तद्विषयकस्नेह उन्नीयते।

गोपायितव्यक्तीकृतानुमोदितगर्हितस्नेहानां क्रमेण प्राचीनोदाहरणानि।

यथा—

असह्यविरहः शश्वत्सौभाग्यं चारु सूचयन्।
प्रजल्पन्मत्पदे लग्नः कान्तः किं नहि नूपुरः ॥

अत्र नायिकया नूपुरनिर्देशान्नायकविषयकस्नेहोऽनाप्तवनितां प्रति गोपायितः।

अपि तरुमूले विहितं जलमाविर्भवति पल्लवाग्रेषु।
निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥

अत्र महद्भिः शिरस्युपकारवहनक्रियया स्वविषयक उपकारकनिष्ठः स्नेहः प्रकटीक्रियते।

गोपायितः सन् व्यक्तीकृतो यथा—

हन्तालि ! सन्तापनिवृत्तयेऽस्याः किं तालवृन्तं तरलीकरोषि।
सन्ताप एषोऽन्तरदाहहेतुर्नतभ्रुवो न व्यजनापनोद्यः ॥

अत्र कयापि सख्या पूर्वं पदभङ्गेन गोपायितोऽपि पश्चात्पदैक्येन व्यक्तीकृतः।

यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः।
तथा प्रपापालिकापि धारां वितनुते तनुम् ॥

अत्र प्रपापालिकया पथिककर्तृकस्वावलोकनसंसूचितः स्वविषयकः पथिकस्य स्नेहोऽनुमोद्यते।

ये शिरसि विनिहिता अपि भवन्ति न सखे ! समानसुखदुःखाः।
चिकुरा इव ते बाला एव जरापाण्डुभावेऽपि ॥

अत्र सहजरूक्षेषु स्नेहो गर्हित इति निवेद्यते।

यत्र प्रेमसम्बन्धिनोऽनुष्ठेयस्य प्रेमविषयकव्यापारप्रयुक्ताननुष्ठानेन गम्यमानं यत् प्रेम तत् ऊर्जस्वि।

यथा—

पीयूषनिस्यन्दि हरे ! यदुक्तं तस्यानुरूपं न हि देयमस्ति।
अद्योत्सहे जीवितमेव दातुं तस्मिन् दिदृक्षा यदि नान्तरायः ॥

अत्र हनुमतेऽवश्यानुष्ठेयस्यापि जीवितदानस्य रामादिदृक्षा-

रूपव्यापारप्रयुक्तानुष्ठानेन सीतायां श्रीरामविषयं प्रेम व्यज्यते।

यत्र चान्यवृत्तिधर्मप्रयुक्तः स्वस्मिन्प्रेमानुकूल्याभावस्तत्प्रकाशनमुखेन प्रेम व्यज्यते तत्समाहितं प्रेम।

यथा—

तदीयविरहप्राप्तिसमयेऽपि न ये गताः।
सखि तेऽद्य कथं यान्तु प्राणा मे वृत्तकीर्त्तनैः॥

अत्र विरहव्याकुलतया नायकविषयकवृत्तस्य कथने आरब्धे सञ्जाताधिकदुःखं प्रति तद्वृत्तकीर्त्तनं मा कुर्विति सख्या उक्ते विरहिण्या नायिकाया उक्तिः। प्राणकठोरताप्रयुक्तप्रेमानुकूल्याभाववत्या कयापि प्रेम व्यञ्जितम्।

यत्र तु प्रेमविषयेण प्रेमाधारेऽनौचित्यप्रकाशनेन तद्विषयं प्रेम व्यज्यते तत्सानुशयम्।

यथा—

लोकत्रयप्रथितमामकपक्षपात-
मुन्मूल्य लक्ष्मण ! सुलक्षण ! किं प्रयासि।
भ्रातर्निसर्गमृदुशेखरमुक्तनिद्रा
त्वां बोधयिष्यति मदङ्घ्रिचिरानुवृत्तिः॥

एवमेतेऽन्ये च सर्वे प्रकाराः कलितचलितप्रेम्णोर्दशाविशेषा हरिदासग्रन्थादवसेयाः।

इत्थं च व्यङ्ग्यतामापन्नं प्रेम त्रिविधम्। प्रेमाधारविषयकं प्रेमाधारकर्तृकं परस्परकर्तृकपरस्परविषयं चेति। स्पष्टत्वाय पुनरेतदुदाह्रियते।

तत्राद्यं यथा—

राधैव तावद्भवतानुनेया नाद्यापि तादृक्क्षतमस्ति किञ्चित्।
पुरस्तु तत्तन्मदलिप्तदासीजनाङ्घ्रिपातैरपि नार्थसिद्धिः॥

अत्र राधा त्वद्विषयकप्रेमभागिति व्यज्यते।

द्वितीयं यथा—

बोधभक्तिदयोपेतान् मुनीन्वीक्ष्य सुलक्षणान्।
रामः सञ्जातपुलकश्रेणिमुग्धवपुर्बभौ॥

भक्तिमहिमासाधिततीव्रबोधा अपि पुनः सिंहावलोकनन्यायेन साधनीभूतभक्तिनिहितदृष्टय एवम्भूताः कृतकृत्या अपि शरणागतभवभयभञ्जनचतुरतरा इति बोधेति विशेषणाभिप्रायः।

तृतीयं यथा—

एकदेहे समाविष्टौ रमोमारमणात्मकौ ।
नरासुरसुरासेव्यौ देवौ कावपि संस्तुमः ॥

व्यङ्ग्यमपि प्रेम पुनस्त्रिविधम् गूढं स्फुटमतिस्फुटं चेति ।

आद्यं यथा—

अनुसम्बन्धिनं याति सम्बन्धी नात्र संशयः ।
त्वयि याते मनो यातं प्राणास्तत्रैव मे स्थिताः ॥

अत्र मनःसम्बन्धः प्रेमात्मको गूढः ।

द्वितीयं यथा—

किं पीडयसि निश्शङ्कं तद्वृत्तस्मारणेन नः ।
यतोऽस्ति क्लेशधारैव राधा सा व्यस्तवर्णभाक् ॥

अत्र क्लेशधाराहेतुविरहप्रतीत्यनन्तरं राधायाः कृष्णविषयं प्रेम सख्या प्रतिपाद्यते ।

तृतीयं यथा—

त्रियामायामस्यां सुतनु ! यमुनायामिव तर-
त्तरङ्गप्रोदञ्चद्विमलदलरक्तोत्पलमिव ।
इयं दृष्टिः शोणा मयि निहितकोणा विजयते
त्यज क्रोधं राधे ! मयि निरपराधे कुरु कृपाम् ॥

अत्र कृपया साक्षादेव प्रेम व्यज्यते । न चात्र प्रेमकृपयोरभेद एवेति वाच्यम् । हीनविषयकवृत्तिविशेषस्यैव कृपात्वादिति ।

इदानीं प्रेम फलवदिति दर्शयति—

स्वेनैव जनितैः पूर्वं शृङ्गारकरुणालयैः ।
अनुभावैः स्वयं याति स प्रेमोपचयं ततः ॥ १२० ॥

स्वेनेति । अस्यार्थः । शृङ्गारकरुणरसयोर्येऽनुभावाः पूर्वमव्यक्तावस्थापन्नेन येन प्रेम्णा जनितास्तदेव प्रेम तैरेव मिलितैः पश्चाद्व्यक्तावस्थं क्रियत इति । तद्रसद्वयभिन्नानां रसानामनुभावास्तत्तद्रसस्थायिभिरेव जन्यन्ते न तु प्रेम्णेति विशेषः ।

करुणस्य तु यः स्थायी स प्रेम्णा जनितः पुरा ।
तेनैव स्थायिना पश्चाद्व्यक्ततामेति पूर्ववत् ॥ १२१ ॥

करुणेति । येन प्रेम्णा पूर्वं करुणरसस्थायी यः शोको जनितस्तेनैव शोकेन स प्रेमा पूर्वमव्यक्तावस्थापन्नो व्यक्ततां नीयते ।

रसमात्रस्फुटीभावे हेतुः प्रेम निगद्यते ।

रसमात्रेति । प्रेमशून्येऽलौकिकस्य रसस्यानाविर्भावादिति बोध्यम् ।

उपास्तयोऽपि जायन्ते चित्तशुद्धिविधायिना ॥ १२२ ॥
उन्मादिसंज्ञां भजता प्रेम्णेत्यत्र मतं स्थितम् ।

उपास्तय इति । उपास्तीनां सर्वासां चित्तशुद्धिद्वारोन्मादिसंज्ञकप्रेमसाध्यत्वमित्यर्थः ।

ननु वेदविहितं कर्म चित्तशुद्धेः साधकमस्ति तत्किं प्रेम्णेत्यत आह—

कर्मापि शोधकं सत्यमशक्ते सुलभं न तत् ॥ १२३ ॥

कर्मेति । आमयादिदोषदूषितेन पुरुषेण शरीरसामर्थ्यसाध्यस्य कर्मणोऽनुष्ठातुमशक्यत्वादशक्ते कर्म दुर्लभमित्यर्थः ।

इदानीं ग्रन्थान्तं सूचयन्नाह—

आपातरमणीयोऽपि गलितान्तोऽयमुल्लसन् ।
पुमर्थसाधनीभूतसन्तृप्तत्वाय कल्पते ॥ १२४ ॥

आपातेति ।

यदुत्था कक्षापि श्रुतिमनुसृतान्तर्दलयति ।
.................................................
.................................................
.................................................
हयग्रीवो वेत्ति त्वदखिलगुणं त्वन्मयतया
कथञ्चिन्नाभ्युत्थोऽप्यहह गुणमन्योऽपि तदनु ।
तदङ्घ्रिध्यानोद्यत्सुकृतकणलब्धैः कतिपयैः
ककाराद्यैर्वर्णैर्वयमपि कथं तत्र कवयः ॥
अखण्डब्रह्माण्डस्फुटघटविधानात्ययविधौ
त्वदीयापाङ्गस्य क्षणमपि विलम्बो न भगवन् ! ।
भवप्रौढज्वालावलिजनितदाहाकुलधियो
ममोद्धारे राधापरिवृढ ! किमर्थं परिकरः ॥
बाणाग्निमुनिचन्द्रोत्थवत्सरस्यादिमे दिने ।
एषा वितीर्णा बह्वर्था वाणी विष्णुपदे त्वभूत् ॥

समाप्तोऽयं प्रेमविभागखण्डः ॥

इति श्रीमत्त्रिपुरहरपुरवासिना शास्त्रविचारचातुरीचमत्कारपारावारपारीणधुरीणजोजारकुलतिलकायमानविश्वनाथपण्डितेन विरचितं प्रेमरसायनं समाप्तिमगमत् ।

५६ अल[illegible]राम-
शास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः । (अलं०वि०१) रु० १-४

५७ शक्तिवादः । श्रीगदाधरभट्टाचार्यप्रणीतः । टीकात्रयोपेतः । कृष्ण-
भट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या
श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शना-
द्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया
विनोदिन्या च समेतः । ( न्या० वि० ७ ) रु० २-०

५८ प्रौढमनोरमा । म. म. श्रीभट्टोजीदीक्षितविरचिता तत्पौत्र म. म.
श्रीहरिदीक्षितविरचितलघुशब्दरत्नाख्यव्याख्यया समेता । म.
म. पण्डितश्रीभैरवमिश्रविरचितशब्दरत्नव्याख्यया युक्ता ।
श्रीयुतभाण्डारीत्युपाह्वमाधवशास्त्रिविरचित प्रभानामकटिप्प-
ण्या समलङ्कृता । श्रीयुतजगन्नाथशास्त्रिविरचितयाऽव्ययी-
भावस्य शब्दरत्नप्रदीपकनामकटीप्पण्याऽलङ्कृता ( अव्ययी
भावान्तः प्रथमो भागः ) ( व्याकरण वि० ९ ) रु० ५—०

५९ आपस्तम्बगृह्यसूत्रम् । श्रीहरदत्तप्रणीतयाऽनाकुलाख्यया व्याख्यया,
श्रीसुदर्शनाचार्यप्रणीतया तात्पर्यदर्शनाख्यया व्याख्यया च
समलङ्कृतम्, पृथक् सूत्रपाठेन, पाठभेदेन, मीमांसापदार्थविव
रणेन च संयोजितम् । ( कर्म० वि० ५ ) रु० ३—०

६० नाट्यशास्त्रम् । भरतमुनिप्रणीतम् ( सम्पूर्णम् ) साहित्योपाध्याय
एम.ए. इत्यादिपदवीभाजा पण्डित बटुकनाथ शर्म्मणा तथा
साहित्यशास्त्रि एम.ए. पदवीभृता पण्डित बलदेवोपाध्यायेन
च सम्पादितम् । ( नाट्यशास्त्र वि० १ ) रु० ५—०

६१ काव्यालङ्कारः । श्रीभामहाचार्येण विनिर्मितः । काशीविश्ववि-
द्यालयाध्यापकाभ्यां पण्डित बटुकनाथ शर्मा एम० ए० सा-
हित्योपाध्यायः तथा पण्डित बलदेव उपाध्याय एम० ए०
साहित्यशास्त्री इत्येताभ्यां भूमिकादिभिः समलङ्कृत्य सम्पा-
दितः, काशी विश्वविद्यालयोपकुलपतिपदं विभूषयद्भिः श्री-
मदाचार्यप्रवरैः आनन्दशङ्कर ध्रुव महोदयैः लिखितेन प्राक्-
कथनेन सनाथीकृतः । (अलङ्कार वि० २) रु० १-८

६२ ब्रह्मवादः । गोस्वामि श्रीहरिरायजी महाराज विरचितः । श्री-
गोपालकृष्णभट्ट विरचित विवरणाख्यव्याख्यासमलङ्कृतः ।
तथा गोस्वामी श्रीव्रजनाथविरचितो ब्रह्मवादः । तथा शुद्धा-
द्वैतपरिष्कारः श्रीमद्रामकृष्णभट्ट विरचितः । श्रीरघुनाथ-
शास्त्रि विरचित शुद्धाद्वैतपरिष्कारतात्पर्यम् । श्रीहरि-
शङ्कर शास्त्रि-वेदान्तविशारदेन विस्तृत भूमिकया विवि-
धपरिशिष्टैर्भाषानुवादेन टिप्पण्यादिना च समलङ्कृतः ।
( शुद्धाद्वैतसम्प्रदाय वि० १ ) रु० १—०

६३ प्रेमरसायनम् । श्रीविश्वनाथपण्डितरचितम (का०वि० ८) रु० १—०

जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरिज आफिस, विद्याविलास प्रेस
गोपालमन्दिर के उत्तर फाटक बनारस सिटी ।